तृप्रधानत्वाच्छरीरस्य सारथिनेतृप्रधान इव रथः। सर्वं हि देहगतं कार्यं
द्धिकर्तव्यमेव प्रायेण। मनः संकल्पविकल्पादिलक्षणं प्रग्रहं रशनां विद्धि।
नसा हि प्रगृहीतानि श्रोत्रादीनि करणानि प्रवर्तन्ते रशनयेवाश्वाः॥

**इंद्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान्।**
**आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥४॥**

इंद्रियाणि चक्षुरादीनि हयानाहू रथकल्पनाकुशलाः, शरीरस्याकर्षणसा-
न्यात्। तेष्वेंद्रियेषु हयत्वेन परिकल्पितेषु गोचरान्मार्गान् रूपादीन्विषयान्
द्धि। आत्मेंद्रियमनोयुक्तं शरीरेंद्रियमनोभिः सहितं संयुक्तमात्मानं भोक्तेति
ारीत्याहुर्मनीषिणो विवेकिनः। न हि केवलस्यात्मनो भोक्तृत्वमस्ति, बुद्ध्या-
ाधिकृतमेव तस्य भोक्तृत्वम्। तथा च श्रुत्यंतरं केवलस्याभोक्तृत्वमेव दर्श-
ते 'ध्यायतीव लेलायतीव' इत्यादि। एवं च सति वक्ष्यमाणरथकल्पनया
गवस्य पदस्यात्मतया प्रतिपत्तिरुपपद्यते, नान्यथा स्वभावानतिक्रमात्॥

**यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा।**
**तस्येंद्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥५॥**

तत्रैवं सति यस्तु अविज्ञानवान् यस्य बुद्ध्याख्यः सारथिरविज्ञानोऽनिपुणो
विवेकी प्रवृत्तौ च निवृत्तौ च भवति, यथेतरो रथचर्यायामयुक्तेनाप्रगृहीतेनास-
हितेन मनसा प्रग्रहस्थानीयेन सदा युक्तो भवति, तस्याकुशलबुद्धिसारथेरिंद्रि-
यश्वस्थानीयान्यवश्यान्यशक्यनिवारणानि दुष्टाश्वा अदान्ताश्वा इवेतरसारथे-
न्ति॥

**यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा।**
**तस्येंद्रियाणि वश्यानि सदश्वा इव सारथेः॥६॥**

यस्तु पुनः पूर्वोक्तविपरीतसारथिर्भवति विज्ञानवान्प्रगृहीतमनाः समाहित-
ः सदा, तस्याश्वस्थानीयानींद्रियाणि प्रवर्तयितुं निवर्तयितुं वा शक्यानि
ानि दान्ताः सदश्वा इवेतरसारथेः॥

**यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः।**
**न स तत्पदमाप्नोति संसारं चाधिगच्छति॥७॥**

तस्य पूर्वोक्तस्याविज्ञानवतः इदं फलमाह—यस्त्वविज्ञानवान्भवति। अमन-
प्रगृहीतमनस्कः स तत एवाशुचिः सदैव। न स रथी तत्पूर्वोक्तमक्षरं यत्परं

## तृतीया वल्ली ।

**ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायातपौ ब्रह्मविदो वदन्ति पंचाग्नयो ये च त्रिणाचिकेताः ॥**

ऋतं पिबन्ताविल्यस्या वल्ल्याः संबंधः । विद्याविद्ये नाना वि इत्युपन्यस्ते, न तु सफले ते यथावन्निर्णीते । तन्निर्णयार्था रथरूपककल्पः च प्रतिपत्तिसौकर्यम् । एवं च प्राप्तृप्राप्यगन्तृगन्तव्याविवेकार्थरथरू द्वावात्मानावुपन्यस्येते—ऋतं सत्यमवश्यंभावित्वात्कर्मफलं पिबन्तौ । कर्मफलं पिबति भुंक्ते नेतरस्तथापि पातृसंबंधात्पिबन्तावित्युच्यते च्छ येन । सुकृतस्य स्वयंकृतस्य कर्मण ऋतमिति पूर्वेण संबंधः । लोकेऽ रीरे । गुहां गुहायां बुद्धौ प्रविष्टौ । परमे बाह्यपुरुषाकाशसंस्थानापेक्षया प परार्धे परस्य ब्रह्मणोऽर्धं स्थानं परार्धं हार्दाकाशम् । तस्मिन्हि परं ब्र भ्यते । ततस्तस्मिन्परमे परार्धे हार्दाकाशे प्रविष्टावित्यर्थः । तौ च च्छा विव विलक्षणौ संसारित्वासंसारित्वेन ब्रह्मविदो वदन्ति कथयन्ति । न के कर्मिण एव वदन्ति । पंचाग्नयो गृहस्थाः । ये च त्रिणाचिकेताः, त्रिःकृत चिकेतोऽग्निः चितो यैस्ते त्रिणाचिकेताः ॥

**यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् ।**
**अभयं तितीर्षतां पारं नाचिकेतꣳ शकेमहि ॥२॥**

यः सेतुः सेतुरिव सेतुरीजानानां यजमानानां कर्मिणां दुःखसंतरणार्थः नाचिकेतं नाचिकेतोऽग्निस्तं, वयं ज्ञातुं चेतुं च शकेमहि शक्नुवन्तः । किंच यः भयशून्यं संसारस्य पारं तितीर्षतां तर्तुमिच्छतां ब्रह्मविदां यत्परमाश्रयमः त्माख्यं ब्रह्म, तच्च ज्ञातुं शकेमहि । परापरे ब्रह्मणी कर्मिब्रह्मविदाश्रये व्ये इति वाक्यार्थः । एतयोरेव ह्युपन्यासः कृतः 'ऋतं पिबन्तौ' [३.१] इ

**आत्मानꣳ रथिनं विद्धि शरीरꣳ रथमेव तु ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥३॥**

तत्र यः उपाधिकृतः संसारी विद्याविद्ययोरधिकृतो मोक्षगमनाय र गमनाय च, तस्य तदुभयगमने साधनो रथः कल्प्यते । तत्र आत्मान संसारिणं रथिनं रथस्वामिनं विद्धि जानीहि । शरीरं रथमेव तु रथबद्धहयस यैरिंद्रियैराकृष्यमाणत्वाच्छरीरस्य । बुद्धिं तु अध्यवसायलक्षणां सारथिं विद्धि,

तृप्रधानत्वाच्छरीरस्य सारथिनेतृप्रधान इव रथः। सर्वं हि देहगतं कार्यं द्धिकर्तव्यमेव प्रायेण। मनः संकल्पविकल्पादिलक्षणं प्रग्रहं रशनां विद्धि। नसा हि प्रगृहीतानि श्रोत्रादीनि करणानि प्रवर्तन्ते रशनयेवाश्वाः॥

**इंद्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान्।**
**आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥४॥**

इंद्रियाणि चक्षुरादीनि हयानाहू रथकल्पनाकुशलाः, शरीरस्याकर्षणसा-न्यात्। तेष्वेंद्रियेषु हयत्वेन परिकल्पितेषु गोचरान्मार्गान् रूपादीन्विषयान् द्धि। आत्मेंद्रियमनोयुक्तं शरीरेंद्रियमनोभिः सहितं संयुक्तमात्मानं भोक्तेति शारीत्याहुर्मनीषिणो विवेकिनः। न हि केवलस्यात्मनो भोक्तृत्वमस्ति, बुद्धया-गाधिकृतमेव तस्य भोक्तृत्वम्। तथा च श्रुत्यंतरं केवलस्याभोक्तृत्वमेव दर्श-ते 'ध्यायतीव लेलायतीव' इत्यादि। एवं च सति वक्ष्यमाणरथकल्पनया गवस्य पदस्यात्मतया प्रतिपत्तिरुपपद्यते, नान्यथा स्वभावानतिक्रमात्॥

**यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा।**
**तस्येंद्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः॥५॥**

तत्रैवं सति यस्तु अविज्ञानवान् यस्य बुद्ध्याख्यः सारथिरविज्ञानोऽनिपुणो विवेकी प्रवृत्तौ च निवृत्तौ च भवति, यथेतरो रथचर्यायामयुक्तेनाप्रगृहीतेनास-हितेन मनसा प्रग्रहस्थानीयेन सदा युक्तो भवति, तस्याकुशलबुद्धिसारथेरिंद्रि-यश्वस्थानीयान्यवश्यान्यशक्यनिवारणानि दुष्टाश्वा अदान्ताश्वा इवेतरसारथे-न्ति॥

**यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा।**
**तस्येंद्रियाणि वश्यानि सदश्वा इव सारथेः॥६॥**

यस्तु पुनः पूर्वोक्तविपरीतसारथिर्भवति विज्ञानवान्प्रगृहीतमनाः समाहित-ाः सदा, तस्याश्वस्थानीयानींद्रियाणि प्रवर्तयितुं निवर्तयितुं वा शक्यानि ानि दान्ताः सदश्वा इवेतरसारथेः॥

**यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः।**
**न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥७॥**

तस्य पूर्वोक्तस्याविज्ञानवतः इदं फलमाह—यस्त्वविज्ञानवान्भवति। अमन-ऽप्रगृहीतमनस्कः स तत एवाशुचिः सदैव। न स रथी तत्पूर्वोक्तमक्षरं यत्परं

पदमाप्नोति तेन सारथिना । न केवलं तन्नाप्नोति, संसारं च जन्मम
अधिगच्छति ॥

**यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः ।**
**स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥८॥**

यस्तु द्वितीयो विज्ञानवान्विज्ञानवत्सारथ्युपेतो रथी विद्वानित्येतत मनाः समनस्कः स तत एव सदा शुचिः, स तु तत्पदमाप्नोति यस्मादाप्रच्युतः सन्भूयः पुनर्न जायते संसारे ॥

**विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।**
**सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥९॥**

किं तत्पदमित्याह— विज्ञानसारथिर्यस्तु यो विवेकबुद्धिसारथिः मनःप्रग्रहवान्प्रगृहीतमनाः समाहितचित्तः सञ्शुचिर्नरो विद्वान्सोऽध्वनः संपारं परमेव अधिगन्तव्यमित्येतत् आप्नोति, मुच्यते सर्वसंसारबंधनैः । तद्विपनशीलस्य ब्रह्मणः परमात्मनो वासुदेवाख्यस्य परमं प्रकृष्टं पदं स्थानं, इत्येतद्यदसौ आप्नोति विद्वान् ॥

अधुना यत्पदं गन्तव्यं तस्य इंद्रियाणि स्थूलान्यारभ्य सूक्ष्मतारतम प्रत्यगात्मतया अधिगमः कर्तव्य इत्येवमर्थमिदमारभ्यते—

**इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥१०॥**

स्थूलानि तावदिंद्रियाणि, तानि यैरर्थैरात्मप्रकाशनायारब्धानि तेभ्य येभ्यः स्वकार्येभ्यस्ते परा ह्यर्थाः सूक्ष्मा महान्तश्च प्रत्यगात्मभूताश्च । तेभ्योः भ्यश्च परं सूक्ष्मतरं महत्प्रत्यगात्मभूतं च मनः । मनःशब्दवाच्यं मनस अभूतसूक्ष्मं संकल्पविकल्पाद्यारंभकत्वात् । मनसोऽपि परा सूक्ष्मतरा महत्तरा गात्मभूता च बुद्धिः, बुद्धिशब्दवाच्यमध्यवसायाद्यारंभकं भूतसूक्ष्मम् । बुद्धे सर्वप्राणिबुद्धीनां प्रत्यगात्मभूतत्वादात्मा महान्सर्वमहत्त्वादव्यक्तायत्प्रथमं हैरण्यगर्भं तत्त्वं बोधाबोधात्मकं महानात्मा बुद्धेः पर इत्युच्यते ॥

**महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।**
**पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥११॥**

महतोऽपि परं सूक्ष्मतरं प्रत्यगात्मभूतं सर्वमहत्तरं च अव्यक्तं सर्वस्य
ातो बीजभूतमव्याकृतनामरूपं सतत्त्वं सर्वकार्यकारणशक्तिसमाहाररूपं अव्यक्तं
्याकृताकाशादिनामवाच्यं परमात्मन्योतप्रोतभावेन समाश्रितं वटकणिकाया-
व वटवृक्षशक्तिः । तस्मादव्यक्तात्परः सूक्ष्मतरः सर्वकारणकारणत्वात्प्रत्यगा-
त्वाच्च महांश्च, अत एव पुरुषः सर्वपूरणात् । ततोऽन्यस्य परस्य प्रसंगं निवा-
न्नाह पुरुषान्न परं किंचिदिति । यस्मान्नास्ति पुरुषाच्चिन्मात्रघनात्परं किंचिदपि
स्वंतरं, तस्मात्सूक्ष्मत्वमहत्त्वप्रत्यगात्मत्वानां सा काष्ठा निष्ठा पर्यवसानम् । अत्र
द्रियेभ्य आरभ्य सूक्ष्मत्वादि परिसमाप्तम् । अत एव च गन्तॄणां सर्वगतिमतां
ारिणां सा परा प्रकृष्टा गतिः । "यद्गत्वा न निवर्तन्ते" इति स्मृतेः ॥

**एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते ।**
**दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥१२॥**

ननु गतिश्चेदागत्यापि भवितव्यं कथं "यस्माद्भूयो न जायते" इति ।
दोषः । सर्वस्य प्रत्यगात्मत्वादवगतिरेव गतिरित्युपचर्यते । प्रत्यगात्मत्वं च
तमिंद्रियमनोबुद्धिपरत्वेन । यो हि गन्ता सोऽयमप्रत्यग्रूप गच्छत्यनात्मभूतं
विंदति स्वरूपेण । तथा च श्रुतिः— "अनध्वगा अध्वसु पारयिष्णवः"
द्या । तथा च दर्शयति प्रत्यगात्मत्वं सर्वस्य । एष पुरुषः सर्वेषु ब्रह्मादि-
पर्यंतेषु भूतेषु गूढः संवृतो दर्शनश्रवणादिकर्मा अविद्यामायाच्छन्नोऽत एव
मा न प्रकाशत आत्मत्वेन कस्यचित् । अहो अतिगंभीरा दुरवगाह्या विचित्रा
माया, यदयं सर्वो जन्तुः परमार्थतः परमार्थसतत्त्वोऽप्येवं बोध्यमानोऽहं
त्मेति न गृह्णाति, अनात्मानं देहेंद्रियादिसंघातमात्मनो दृश्यमानमपि घटा-
ात्मत्वेनाहममुष्य पुत्र इत्यनुच्यमानोऽपि गृह्णाति । नूनं परस्यैव मायया
ाम्यमानः सर्वो लोको बंभ्रमीति । तथा च स्मरणं "नाहं प्रकाशः सर्वस्य
ायासमावृतः" इत्यादि । ननु विरुद्धमिदमुच्यते 'मत्वा धीरो न शोचति'
.२] 'न प्रकाशते' इति च । नैतदेवम् । असंस्कृतबुद्धेरविज्ञेयत्वान्न प्रका-
इत्युक्तम् । दृश्यते तु संस्कृतयाऽग्र्यया अग्रमिवाग्र्या तया, एकाग्रतयोपेत-
त् सूक्ष्मया सूक्ष्मवस्तुनिरूपणपरया । कैः । सूक्ष्मदर्शिभिः इंद्रियेभ्यः परा
[३.१०] इत्यादिप्रकारेण सूक्ष्मतापारंपर्यदर्शनेन परं सूक्ष्मं द्रष्टुं शीलं येषां
मदर्शिनस्तैः सूक्ष्मदर्शिभिः पंडितैरित्येतत् ।

यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।
ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि

तत्प्रतिपत्त्युपायमाह—यच्छेन्नियच्छेदुपसंहरेत्प्राज्ञो विवेकी । वागत्रोपलक्षणार्था सर्वेषामिंद्रियाणाम् । क्व? मनसी मनसि । तच्च मनो यच्छेज्ज्ञाने प्रकाशस्वरूपे बुद्धावात्मनि । बुद्धिर्हि न्याप्नोतीत्यात्मा प्रत्यक्च तेषाम् । ज्ञानं बुद्धिमात्मनि महति प्रथम प्रथमजवत्स्वच्छस्वभावकमात्मनो विज्ञानमापादयेदित्यर्थः । तं च यच्छेच्छान्ते सर्वविशेषप्रत्यस्तमितरूपेऽविक्रिये सर्वान्तरे सर्वबु मुख्य आत्मनि ॥

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो

एवं पुरुष आत्मनि सर्वं प्रविलाप्य नामरूपकर्मत्रयं यन्मिथ्या क्रियाकारकफललक्षणं स्वात्मयाथात्म्यज्ञानेन मरीच्युदकरज्जुस मरीचिरज्जुगगनस्वरूपदर्शनेनैव स्वस्थः प्रशान्तः कृतकृत्यो अतस्तद्दर्शनार्थमनाद्यविद्याप्रसुप्ता उत्तिष्ठत हे जन्तवः, आत्मज्ञाना जाग्रताज्ञाननिद्राया घोररूपायाः सर्वानर्थबीजभूतायाः क्षयं कु प्राप्योपगम्य वरान्प्रकृष्टानाचार्यांस्तत्त्वविदः, तदुपदिष्टं सर्वान्त स्मीति निबोधतावगच्छत । न ह्युपेक्षितव्यमिति श्रुतिरनुकंप अतिसूक्ष्मबुद्धिविषयत्वाज्ज्ञेयस्य । किमिव सूक्ष्मबुद्धिरित्युच्यते । अग्रं निशिता तीक्ष्णीकृता दुरत्यया दुःखेनात्ययो यस्याः सा दु सा पद्भ्यां दुर्गमनीया तथा दुर्गं दुःसंपाद्यमित्येतत् पथः पंथानं मार्गं कवयो मेधाविनो वदन्ति । ज्ञेयस्य अतिसूक्ष्मत्वात्तद्विषयस्य दुःसंपाद्यत्वं वदन्तीत्यभिप्रायः ॥

तत्कथमतिसूक्ष्मत्वं ज्ञेयस्येत्युच्यते । स्थूला तावदियं मेदिनी रसगंधोपचिता सर्वेंद्रियविषयभूता तथा शरीरम् । तत्रैकैकगुणापक सूक्ष्मत्वमहत्त्वविशुद्धत्वनित्यत्वादितारतम्यं दृष्टमबादिषु यावदाका गंधादयः सर्व एव स्थूलत्वाद्विकाराः शब्दान्ता यत्र न सन्ति, कि त्वादिनिरतिशयत्वं वक्तव्यमित्येतद्दर्शयति श्रुतिः—

**अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगंधवच्च यत् ।**
**अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥१५॥**

अशब्दमस्पर्शमरूपमरसमगंधवच्च यत् एतद्व्याख्यातं ब्रह्म अव्ययं, यद्धि ादिमत्तद्व्येतीदं त्वशब्दादिमत्त्वादव्ययं न व्येति न क्षीयते, अत एव च नित्यं, व्येति तदनित्यमिदं तु न व्येत्यतो नित्यम् । इतश्च नित्यमनाद्यविद्यमान ः कारणमस्य तदिदमनादि । यद्ध्यादिमत्तत्कार्यत्वादनित्यं कारणे प्रलीयते पृथिव्यादि । इदं तु सर्वकारणत्वादकार्यमकार्यत्वान्नित्यं, न तस्य कारण- यस्मिन्प्रलीयेत । तथाऽनंतमविद्यमानोऽन्तः कार्यमस्य तदनंतम् । यथा ादेः फलादिकार्योत्पादनेनाप्यनित्यत्वं दृष्टं, न च तथाप्यंतवत्त्वं ब्रह्मणो- नित्यम् । महतो महत्तत्त्वात् बुद्ध्याख्यात्परं विलक्षणं नित्यविज्ञप्तिस्वरू- सर्वसाक्षि हि सर्वभूतात्मत्वाद्ब्रह्म । उक्तं हि 'एष सर्वेषु भूतेषु' [३.१२] दे । ध्रुवं च कूटस्थं नित्यं न पृथिव्यादिवदापेक्षिकं नित्यत्वम् । तदेवंभूतं मानं निचाय्यावगम्य तमात्मानं मृत्युमुखान्मृत्युगोचरादविद्याकामकर्म- ात्प्रमुच्यते वियुज्यते ॥

**नाचिकेतमुपाख्यानं मृत्युप्रोक्तꣳ सनातनम् ।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते ॥१६॥**

प्रस्तुतविज्ञानस्तुत्यर्थमाह श्रुतिः—नाचिकेतं नचिकेतसा प्राप्तं नाचिकेतं प्रोक्तं मृत्युप्रोक्तमिदमाख्यानमुपाख्यानं वल्लीत्रयलक्षणं सनातनं चिरंतनं वादुक्त्वा ब्राह्मणेभ्यः श्रुत्वा चाचार्येभ्यो मेधावी ब्रह्मैव लोको ब्रह्मलोकस्त- ह्मलोके महीयत आत्मभूत उपास्यो भवतीत्यभिप्रायः ॥

**य इमं परमं गुह्यं श्रावयेत् ब्रह्मसंसदि । प्रयतः श्राद्धकाले वा तदानं- कल्पते तदानंत्याय कल्पत इति ॥१७॥**

इति तृतीया वल्ली ॥

यः कश्चिदिमं ग्रंथं परमं प्रकृष्टं गुह्यं गोप्यं श्रावयेत् ग्रंथतोऽर्थतश्च ब्राह्म- संसदि ब्रह्मसंसदि प्रयतः शुचिर्भूत्वा श्राद्धकाले वा श्रावयेत् भुंजानान् मस्यानंत्यायानंतफलाय कल्पते संपद्यते । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥

**इति काठकोपनिषदि प्रथमोऽध्यायः समाप्तः ॥१॥**

---

## अथ द्वितीयोऽध्यायः ।

'एष सर्वेषु भूतेषु गूढोऽऽत्मा न प्रकाशते दृश्यते त्वग्र्यया बुद्ध्या इत्युक्तम् । कः पुनः प्रतिबंधोऽग्र्याया बुद्धेर्येन तदभावादात्मा न दृ तददर्शनकारणप्रदर्शनार्था वल्ली आरभ्यते । विज्ञाते हि श्रेयःप्रतिबंधक पनयनाय यत्न आरब्धुं शक्यते नान्यथेति—

**परांचि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्म**
**कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥१॥**

परांचि परागंचन्ति गच्छन्तीति, खानि तदुपलक्षितानि श्रोत्रादी खानीत्युच्यन्ते । तानि परांच्येव शब्दादिविषयप्रकाशनाय प्रवर्तन्ते एवंस्वभावकानि तानि व्यतृणद्धिंसितवान्हननं कृतवानित्यर्थः । कोऽसौ परमेश्वरः स्वयमेव स्वतंत्रो भवति सर्वदा न परतंत्र इति । तस्मात् परा पाननात्मभूताञ्शब्दादीन्पश्यत्युपलभते उपलब्धा नान्तरात्मन्नान्तरात्मान एवंस्वभावेऽपि सति लोकस्य कश्चिन्नद्याः प्रतिस्रोतःप्रवर्तनमिव धीरे विवेकी प्रत्यगात्मानं प्रत्यक्चासावात्मा चेति प्रत्यगात्मा । प्रतीच्येव रूढो लोके नान्यत्र । व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्तते । " यदादत्ते यच्चात्ति विषयानिह । यच्चास्य संततो भावस्तस्मादात्मेति इत्यात्मशब्दव्युत्पत्तिस्मरणात् । तं प्रत्यगात्मानं स्वं स्वभावमैक्षदपश्यत्पश्य छंदसि कालानियमात् । कथं पश्यतीत्युच्यते— आवृत्तचक्षुरावृत्तं व्यावृ श्रोत्रादिकमिंद्रियजातमशेषविषयाद्यस्य स आवृत्तचक्षुः । स एवं संस्कृतः त्मानं पश्यति । न हि बाह्यविषयालोचनपरत्वं प्रत्यगात्मेक्षणं चैकस्य स किमर्थं पुनरित्थं महता प्रयासेन स्वभावप्रवृत्तिनिरोधं कृत्वा धीरः प्रत पश्यतीत्युच्यते—अमृतत्वममरणधर्मत्वं नित्यस्वभावतामिच्छन्नात्मन इत्

**पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम्**
**अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥**

यत्तावत्स्वाभाविकं परागेवानात्मदर्शनं तदात्मदर्शनस्य प्रतिबंधकार तत्प्रतिकूलत्वाद्या च परागेवाविद्योपप्रदर्शितेषु दृष्टादृष्टेषु भोगेषु तृष्णा विद्यातृष्णाभ्यां प्रतिबद्धात्मदर्शनः पराचो बहिर्गतानेव कामान्काम्यान्वि यन्ति अनुगच्छन्ति बाला अल्पप्रज्ञाः, ते तेन कारणेन मृत्योरविद्याकाम

प्र यन्ति गच्छन्ति विततस्य विस्तीर्णस्य सर्वतो व्याप्तस्य पाशं, पाश्यते येन तं पाशं देहेंद्रियादिसंयोगावियोगलक्षणम् । अनवरतं जन्ममरणजरा-नेकानर्थव्रातं प्रतिपद्यन्त इत्यर्थः । यत एवमथ तस्माद्धीरा विवेकिनः त्मस्वरूपावस्थानलक्षणममृतत्वं ध्रुवं विदित्वा । देवाद्यमृतत्वं ह्यध्रुवं इदं तु त्मस्वरूपावस्थानलक्षणं ध्रुवं 'न कर्मणा वर्धते नो कनीयान्' इति श्रुतेः । तं कूटस्थमविचाल्यममृतत्वं विदित्वा अध्रुवेषु सर्वपदार्थेष्वनित्येषु ब्राह्मणा इह संसारेऽनर्थप्राये न प्रार्थयन्ते किंचिदपि प्रत्यगात्मदर्शनप्र-त्वात् । पुत्रवित्तलोकैषणाभ्यो व्युत्तिष्ठन्त्येवेत्यर्थः ॥

**येन रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान् ।**
**एतेनैव विजानाति किमत्र परिशिष्यते । एतद्वै तत् ॥३॥**

यद्विज्ञानान्न किंचिदन्यत्प्रार्थयन्ते ब्राह्मणाः, कथं तदधिगम इति उच्यते— ज्ञानस्वभावेनात्मना रूपं रसं गंधं शब्दान्स्पर्शांश्च मैथुनान्मैथुननिमित्तान्सु-प्रान्विजानाति विस्पष्टं जानाति सर्वो लोकः । ननु नैवं प्रसिद्धिः त्मना देहादिविलक्षणेनाहं विजानामीति । देहादिसंघातोऽहं विजानामीति लोकोऽवगच्छति । न त्वेवम् । देहादिसंघातस्यापि शब्दादिस्वरूपत्वा-द्विज्ञेयत्वाविशेषाच्च न युक्तं विज्ञातृत्वम् । यदि हि देहादिसंघातो रूपा-: सन्रूपादीन्विजानीयात् तर्हि बाह्या अपि रूपादयोऽन्योन्यं स्वं स्वं रूपं च युः । न चैतदस्ति । तस्माद्देहादिलक्षणांश्च रूपादीनेतेनैव देहादिव्यतिरि-विज्ञानस्वभावेनात्मना विजानाति लोकः । यथा येन लोहो दहति सोऽग्नि-द्वत् । आत्मनोऽविज्ञेयं किमत्रास्मिँल्लोके परिशिष्यते न किंचित्परिशिष्यते । त्वात्मना विज्ञेयम् । यस्यात्मनोऽविज्ञेयं न किंचित्परिशिष्यते स आत्मा । एतद्वै तत् । किं तद्यन्नचिकेतसा पृष्टं देवादिभिरपि विचिकित्सितं धर्मा-न्यद्विष्णोः परमं पदं यस्मात्परं नास्ति तद्वै एतदधिगतमित्यर्थः ॥

**स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति ।**
**महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥४॥**

अतिसूक्ष्मत्वात् दुर्विज्ञेयमिति मत्वैतमेवार्थं पुनः पुनराह— स्वप्नान्तं स्वप्न-प्रविज्ञेयमित्येतत् । तथा जागरितान्तं जागरितमध्यं जागरितविज्ञेयं च । प्रजागरितान्तौ येनात्मनानुपश्यति लोक इति सर्वं पूर्ववत् । तं महान्तं

विभुमात्मानं मत्वावगम्यात्मभावेन साक्षादहमस्मि परमात्मेति धीरो

**य इमं मध्वदं वेद आत्मानं जीवमंतिकात् ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत्**

किंच यः कश्चिदिमं मध्वदं कर्मफलभुजं जीवं प्राणादिकलापस्य आत्मानं वेद विजानात्यंतिकादंतिके समीपे ईशानमीशितारं भूतभव्यस्य, ततस्तद्विज्ञानादूर्ध्वमात्मानं न विजुगुप्सते न गोपायितुमिच्छ त्वात् । यावद्धि भयमध्यस्थोऽनित्यमात्मानं मन्यते तावद्गोपायितुमिच्छ यदा तु नित्यमद्वैतमात्मानं विजानाति तदा कः किं कुतो वा गोपायितु एतद्वै तदिति पूर्ववत् ॥

**यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।**
**गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यपश्यत । एतद्वै त**

यः प्रत्यगात्मेश्वरभावेन निर्दिष्टः स सर्वात्मेत्येतद्दर्शयति— यः क पूर्वं प्रथमं तपसो ज्ञानादिलक्षणाद्ब्रह्मण इत्येतत् जातमुत्पन्नं हिरण्यगर्भ पेक्ष्य पूर्वमित्याह— अद्भ्यः पूर्वमप्सहितेभ्यः पंचभूतेभ्यो न केवलाभ्यो भिप्रायः । अजायत उत्पन्नो यस्तं प्रथमजं देवादिशरीराण्युत्पाद्य स हृदयाकाशं प्रविश्य तिष्ठन्तं शब्दादीनुपलभमानं भूतेभिर्भूतैः कार्यक सह तिष्ठन्तं यो व्यपश्यत यः पश्यतीत्येतत् । य एवं पश्यति स एतदे यत्तत्प्रकृतं ब्रह्म ॥

**या प्राणेन संभवत्यदितिर्देवतामयी ।**
**गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद्वै तत् ।**

किंच— या सर्वदेवतामयी सर्वदेवतात्मिका प्राणेन हिरण्यगर्भरूपेण ब्रह्मणः संभवति शब्दादीनामदनाददितिस्तां पूर्ववद्गुहां प्रविश्य तिष्ठन्ती तामेव विशिनष्टि— या भूतेभिर्भूतैः समन्विता व्यजायत उत्पन्नेत्येतत् ।

**अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।**
**दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः । एतद्वै तत**

किंच— योऽधियज्ञ उत्तराधरारण्योर्निहितः स्थितो जातवेदा अ सर्वहविषां भोक्ता अध्यात्मं च योगिभिः गर्भ इव गर्भिणीभिरंतर्वत्नीभि न्नभोजनादिना यथा गर्भः सुभृतः सुष्ठु सम्यग्भृतो लोके, इवेत्थमेवर्त्वि

सुभृत इत्येतत् । किंच दिवे दिवेऽहन्यहनीड्यः स्तुत्यो वंद्यश्च कर्मिभिर्योगि-
भ्वरे हृदये च जागृवद्भिर्जागरणशीलैरप्रमत्तैरित्येतत् । हविष्मद्भिराज्यादि-
र्ध्यानभावनावद्भिश्च, मनुष्येभिर्मनुष्यैरग्निरेतद्वै तत्तदेव प्रकृतं ब्रह्म ॥

**यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति ।**
**तं देवाः सर्वेऽर्पितास्तदु नात्येति कश्चन । एतद्वै तत् ॥९॥**

किंच— यतश्च यस्मात्प्राणादुदेत्युत्तिष्ठति सूर्योऽस्तं निम्लोचनं यत्र यस्मि-
न् प्राणेऽहन्यहनि गच्छति, तं प्राणमात्मानं देवाः, सर्वे अग्न्यादयोऽधिदैवं
यश्चाध्यात्मं सर्वे विश्वेऽरा इव रथनाभावर्पिताः संप्रवेशिताः स्थितिकाले ।
ब्रह्मैव । तदेतत्सर्वात्मकं ब्रह्म । तदु नात्येति नातीत्य तदात्मकतां तदन्यत्वं
ति कश्चन कश्चिदपि एतद्वै तत् ॥

**यदेवेह तदमुत्र यदमुत्र तदन्विह ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥१०॥**

यत् ब्रह्मादिस्थावरान्तेषु वर्तमानं तत्तदुपाधित्वादब्रह्मवदवभासमानं संसा-
रस्मात् ब्रह्मण इति मा भूत्कस्यचिदाशंकेतीदमाह— यदेवेह कार्यकारणोपा-
न्वितं संसारधर्मवदवभासमानमविवेकिनां तदेव स्वात्मस्थममुत्र नित्य-
घनस्वभावं सर्वसंसारधर्मवर्जितं ब्रह्म । यच्चामुत्रामुष्मिन्नात्मनि स्थितं
ह तदेवेह नामरूपकार्यकरणोपाधिमनु विभाव्यमानं नान्यत् । तत्रैवं
धिस्वभावभेददृष्टिलक्षणया अविद्यया मोहितः सन्य इह ब्रह्मण्यनानाभूते
न्योऽहं मत्तोऽन्यत्परं ब्रह्मेति नानेव भिन्नमिव पश्यत्युपलभते, स
रणान्मृत्युं मरणं पुनः पुनर्जननमरणभावमाप्नोति प्रतिपद्यते । तस्मात्तथा
त् । विज्ञानैकरसं नैरंतर्येणाकाशवत्परिपूर्णं ब्रह्मैवाहमस्मीति पश्येदिति
र्थः ॥

**मनसैवेदमाप्तव्यं नेह नानास्ति किंचन ।**
**मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥११॥**

प्रागेकत्वविज्ञानाचार्यागमसंस्कृतेन मनसैवेदं ब्रह्मैकरसमाप्तव्यमात्मैव नान्य-
। आप्ते च नानात्वप्रत्युपस्थापिकाया अविद्याया निवृत्तत्वादिह ब्रह्मणि
ास्ति किंचनाणुमात्रमपि । यस्तु पुनरविद्यातिमिरदृष्टिं न मुंचति इह ब्रह्मणि
श्यति, स मृत्योर्मृत्युं गच्छत्येव स्वल्पमपि भेदमध्यारोपयन्नित्यर्थः ॥

तदेव प्रकृतं ब्रह्माह—

**अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत् ॥१ः**

अंगुष्ठमात्रोऽगुष्ठपरिमाणः अंगुष्ठपरिमाणं हृदयपुंडरीकं तच्छिद्रवर्करणोपाधिरंगुष्ठमात्रोऽगुष्ठमात्रवंशपर्वमध्यवर्त्यंबरवत् । पुरुषः पूर्णमनेन मिति । मध्य आत्मनि शरीरे तिष्ठति यस्तमात्मानमीशानं भूतभव्यस्य वि न तत इत्यादि पूर्ववत् ॥

**अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।**
**ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत् ।**

किंच अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः, अधूमकमिति युक्तं ज्योति त्वात् । यस्त्वेवं लक्षितो योगिभिर्हृदय ईशानो भूतभव्यस्य स एव नित्यः स्थोऽद्येदानीं प्राणिषु वर्तमानः स उ श्वोऽपि वर्तिष्यते, नान्यस्तत्समोऽ जनिष्यत इत्यर्थः । अनेन 'नायमस्तीति चैके' [१.२०] इत्ययं पक्षो न्य ऽप्राप्तोऽपि स्ववचनेन श्रुत्या प्रत्युक्तस्तथा क्षणभंगवादश्च ॥

**यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।**
**एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥१४॥**

पुनरपि भेददर्शनापवादं ब्रह्मण आह— यथोदकं दुर्गे दुर्गमे देश उ वृष्टं सिक्तं पर्वतेषु पर्ववत्सु निम्नप्रदेशेषु विधावति विकीर्णं सद्विनश्यति, एवं नात्मनोऽभिन्नान्पृथक्पश्यन्पृथगेव प्रतिशरीरं पश्यंस्तानेव शरीरभेदानुवर्तिनं विधावति । शरीरभेदमेव पृथक्पुनः पुनः प्रतिपद्यत इत्यर्थः ॥

**यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।**
**एवं मुनेर्विजानत आत्मा भवति गौतम ॥१५॥**

अस्य पुनर्विद्यावतो विध्वस्तोपाधिकृतभेददर्शनस्य विशुद्धविज्ञानघनैक द्वयमात्मानं पश्यतो विजानतो मुनेर्मननशीलस्यात्मस्वरूपं कथं संभवतीत् यथोदकं शुद्धे प्रसन्ने शुद्धं प्रसन्नमासिक्तं प्रक्षिप्तमेकरसमेव नान्यथा त भवति आत्माप्येवमेव भवत्येकत्वं विजानतो मुनेर्मननशीलस्य हे गौत तस्मात्कुतार्किकभेददृष्टिं नास्तिककुदृष्टिं चोज्झित्वा मातृपितृसहस्रेभ्योऽपि षिणा वेदेनोपदिष्टमात्मैकत्वदर्शनं शान्तदर्पैरादरणीयमित्यर्थः ॥

इति चतुर्थी वल्ली ॥

न प्रकारान्तरेण ब्रह्मतत्त्वनिर्धारणार्थोऽयमारंभो दुर्विज्ञेयत्वात् ब्रह्मणः—

**पुरमेकादशद्वारमजस्यावक्रचेतसः ।**

**अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते । एतद्वै तत् ॥१॥**

पुरं पुरमिव पुरम् । द्वारद्वारपालाधिष्ठात्राद्यनेकपुरोपकरणसंपत्तिदर्शनाच्छ-रम् । पुरं च सोपाकरणं स्वात्मनाऽसंहतस्वतंत्रस्वाम्यर्थं दृष्टम् । तथेदं गान्यादनेकोपकरणसंहतं शरीरं स्वात्मनाऽसंहतराजस्थानीयस्वाम्यर्थं भवितु- । तच्चेदं शरीराख्यं पुरमेकादशद्वारं एकादश द्वाराण्यस्य सप्त शीर्षण्यानि, सद्वार्वांचि त्रीणि, शिरस्येकं, तैरेकादशद्वारं पुरम् । कस्य? अजस्य जन्मा-क्रियारहितस्यात्मनो राजस्थानीयस्य पुरधर्मविलक्षणस्य । अवक्रचेतसोऽवक्र-क्रमादित्यप्रकाशवन्नित्यमेवावस्थितमेकरूपं चेतो विज्ञानमस्येत्यवक्रचेतास्त-च्चेतसो राजस्थानीयस्य ब्रह्मणः । यस्येदं पुरं तं परमेश्वरं पुरस्वा-नुष्ठाय ध्यात्वा । ध्यानं हि तस्यानुष्ठानं सम्यग्विज्ञानपूर्वकम् । तं सर्वैषणा-क्तः सन्समं सर्वभूतस्थं ध्यात्वा न शोचति । तद्विज्ञानादभयप्राप्तेः शोका-भावात्कुतो भयेक्षा । इहैवाविद्याकृतकामकर्मबंधनैर्विमुक्तो भवति । विमु-क्तन्विमुच्यते पुनः शरीरं न गृह्णातीत्यर्थः ॥

**हंसः शुचिषद्वसुरंतरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।**

**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥२॥**

स तु नैकशरीरपुरवर्त्येवात्मा किं तर्हि सर्वपुरवर्ती । कथम्— हंसो हन्ति ोति । शुचिषच्छुचौ दिव्यादित्यात्मना सीदतीति । वसुर्वासयति सर्वानिति । मनांतरिक्षे सीदतीत्यंतरिक्षसत् । होताऽग्निः, "अग्निर्वै होता" इति श्रुतेः । पृथिव्यां सीदतीति वेदिषत् । "इयं वेदिः परोऽन्तः पृथिव्याः" इत्यादि-ात् । अतिथिः सोमः सन्दुरोणे कलशे सीदतीति दुरोणसत् । ब्राह्मणो-रूपेण वा दुरोणेषु गृहेषु सीदतीति । नृषन्नृषु मनुष्येषु सीदतीति । षु देवेषु सीदतीति । ऋतसत् ऋतं सत्यं यज्ञो वा तस्मिन्सीदतीति । द्व्योम्न्याकाशे सीदतीति । अब्जा अप्सु शंखशुक्तिमकरादिरूपेण जायत गोजा गवि पृथिव्यां व्रीहियवादिरूपेण जायत इति । ऋतजा यज्ञांगरूपेण इति । अद्रिजाः पर्वतेभ्यो नद्यादिरूपेण जायत इति । सर्वात्मापि सन्नृत स्वभाव एव । बृहन्महान्सर्वकारणत्वात् । यदाप्यादित्य एव मंत्रेणोच्यत

तदाप्यात्मस्वरूपत्वमादित्यस्यांगीकृतत्वाद्ब्रह्मणो व्याख्यानेऽप्यविरोधः एवात्मा जगतो नात्मभेद इति मंत्रार्थः ॥

**ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ।**
**मध्ये वामनमासीनं विश्वे देवा उपासते ॥३॥**

आत्मनः स्वरूपाधिगमे लिंगमुच्यते—ऊर्ध्वं हृदयात्प्राणं प्रा न्नयत्यूर्ध्वं गमयति । तथाऽपानं प्रत्यगधोऽस्यति क्षिपति यः इति तं मध्ये हृदयपुंडरीकाकाश आसीनं बुद्धावभिव्यक्तविज्ञानप्रकाशनं व संभजनीयं विश्वे सर्वे देवाश्चक्षुरादयः प्राणा रूपादिविज्ञानं बलिमुपा इव राजानमुपासते तादर्थ्येनानुपरतव्यापारा भवन्तीत्यर्थः । यदर्था सर्वे वायुकरणव्यापाराः सोऽन्यः सिद्ध इति वाक्यार्थः ॥

**अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः ।**
**देहाद्विमुच्यमानस्य किमत्र परिशिष्यते । एतद्वै तत**

किंच अस्य शरीरस्थस्यात्मनो विस्रंसमानस्य भ्रंशमानस्य देहिने विस्रंसनशब्दार्थमाह– देहाद्विमुच्यमानस्येति । किमत्र परिशिष्यते प्र न किंचन परिशिष्यते अत्र देहे पुरस्वामिविद्रवण इव पुरवासिनां य पगमे क्षणमात्रात्कार्यकरणकलापरूपं सर्वमिदं हतबलं विध्वस्तं भव भवति सोऽन्यः सिद्ध आत्मा ॥

**न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।**
**इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥५॥**

स्यान्मतं प्राणापानाद्यपगमादेवेदं विध्वस्तं भवति न तु तद्व्यतिरि मात्प्राणादिभिरेवेह मर्त्यो जीवतीति । नैतदस्ति । न प्राणेन नापानेन च वा मर्त्यो मनुष्यो देहवान्कश्चन जीवति न कोऽपि जीवति । न ह्येषां संहत्यकारित्वाज्जीवनहेतुत्वमुपपद्यते । स्वार्थेनासंहतेन परेण केनचिदप्रयुक्त नामवस्थानं न दृष्टं यथा गृहादीनां लोके, तथा प्राणादीनामपि संहतत्व मर्हति । अत इतरेण तु इतरेणैव संहतप्राणादिविलक्षणेन तु सर्वे संहत जीवन्ति प्राणान्धारयन्ति । यस्मिन्संहतविलक्षण आत्मनि सति पर प्राणापानौ चक्षुरादिभिः संहतावुपाश्रितौ, यस्यासंहतस्यार्थे प्राणापानौ व्यापारं कुर्वन्वर्तते संहतः सन्स ततोऽन्यः सिद्ध इत्यभिप्रायः ॥

हंत त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् ।
यथा च मरणं प्राप्य आत्मा भवति गौतम ॥६॥

हंतेदानीं पुनरपि ते तुभ्यमिदं गुह्यं गोप्यं ब्रह्म सनातनं चिरंतनं प्रवक्ष्यामि । यद्विज्ञानात्सर्वसंसारोपरमो भवति, अविज्ञानाच्च यस्य मरणं प्राप्य यथा चात्मा भवति यथात्मा संसरति तथा शृणु हे गौतम ॥

योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥७॥

योनिं योनिद्वारं शुक्रबीजसमन्विताः सन्तोऽन्ये केचिदविद्यावन्तो मूढाः प्रपद्यन्ते शरीरत्वाय शरीरग्रहणार्थं देहिनो देहवन्तः, योनिं प्रविशन्तीत्यर्थः । स्थाणुं वृक्षादिस्थावरभावमन्येऽत्यंताधमा मरणं प्राप्यानुसंयन्त्यनुगच्छन्ति । यथाकर्म यद्यस्य कर्म तद्यथाकर्म यैर्यादृशं कर्मेह जन्मनि कृतं तद्वशेनेत्येतत् । तथा च यथाश्रुतं यादृशं च विज्ञानमुपार्जितं तदनुरूपमेव शरीरं प्रतिपद्यन्त इत्यर्थः । "यथाप्रज्ञं हि संभवाः" इति श्रुत्यंतरात् ॥

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत् ॥८॥

यत्प्रतिज्ञातं गुह्यं ब्रह्म प्रवक्ष्यामीति तदाह— य एष सुप्तेषु प्राणादिषु जागर्ति न स्वपिति । कथम् । कामं कामं तं तमभिप्रेतं स्त्र्याद्यर्थमविद्यया निर्मिमाणो निष्पादयञ्जागर्ति पुरुषो यः, तदेव शुक्रं शुभ्रं शुद्धं तद्ब्रह्म नान्यद्गुह्यं ब्रह्मास्ति । तदेवामृतमविनाश्युच्यते सर्वशास्त्रेषु । किंच पृथिव्यादयो लोकास्तस्मिन्नेव सर्वे ब्रह्मणि श्रिताः आश्रिताः सर्वलोककारणत्वात्तस्य । तदु नात्येति कश्चनेत्यादि पूर्ववदेव ॥

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥९॥

अनेकतार्किककुबुद्धिविचालितान्तःकरणानां प्रमाणोपपन्नमप्यात्मैकत्वविज्ञानं असकृदुच्यमानमप्यनृजुबुद्धीनां ब्राह्मणानां चेतसि नाधीयत इति तत्प्रतिपादन आदरवती पुनःपुनराह श्रुतिः— अग्निर्यथैक एव प्रकाशात्मा सन्भुवनं भवन्त्यस्मिन्भूतानीति भुवनमयं लोकस्तमिमं प्रविष्टोऽनुप्रविष्टः, रूपं रूपं प्रति दार्वादिदाह्यभेदं प्रतीत्यर्थः, प्रतिरूपस्तत्र तत्र प्रतिरूपवान्दाह्यभेदेन बहुविधो बभूव ।

एक एव तथा सर्वभूतान्तरात्मा रूपं रूपं सर्वेषां भूतानामभ्यंतर आत्मा क्ष्मत्वाद्दार्वादिष्विव सर्वदेहं प्रति प्रविष्टत्वात्प्रतिरूपो बभूव बहिश्च स्वेना रूपेणाकाशवत् ॥

**वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।**
**एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च**

तथाऽन्यो दृष्टान्तः—वायुर्यथैक इत्यादि । प्राणात्मना देहेष्वनुप्रविष्टं रूपं प्रतिरूपो बभूवेत्यादि समानम् ॥

**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः**

एकस्य सर्वात्मत्वे संसारदुःखित्वं परस्यैव स्यादिति प्राप्ते इदमुच्य सूर्यो यथा चक्षुष आलोकेनोपकारं कुर्वन्मूत्रपुरीषाद्यशुचिप्रकाशनेन त सर्वलोकस्य चक्षुरपि सन्न लिप्यते चाक्षुषैरशुच्यादिदर्शननिमित्तैराध्या पापदोषैर्बाह्यैश्चाशुच्यादिसंसर्गदोषैः एकः सन् तथा सर्वभूतान्तरात्मा न लि लोकदुःखेन बाह्यः । लोको ह्यविद्यया स्वात्मन्यध्यस्तया कामकर्मोद्भवं दुः भवति । न तु सा परमार्थतः स्वात्मनि । यथा रज्जुशुक्तिकोषरगगनेषु सर्प दकमलानि न रज्ज्वादीनां स्वतो दोषरूपाणि सन्ति, संसर्गिणि विपरीत ध्यासनिमित्तात्तद्दोषवद्विभाव्यन्ते । न तद्दोषैस्तेषां लेपो विपरीतबुद्ध्यध्यास हि ते । तथात्मनि सर्वो लोकः क्रियाकारकफलात्मकं विज्ञानं सर्पादिस् विपरीतमध्यस्य तन्निमित्तं जन्ममरणादिदुःखमनुभवति, न त्वात्मा सर्वलोक सन्विपरीताध्यारोपनिमित्तेन लिप्यते लोकदुःखेन । कुतः बाह्यः रज्ज्वा विपरीतबुद्ध्यध्यासबाह्यो हि स इति ॥

**एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ।**

किंच स हि परमेश्वरः सर्वगतः स्वतंत्र एको न तत्समोऽभ्यधिको अस्ति । वशी सर्वं ह्यस्य जगद्वशे वर्तते । कुतः ? सर्वभूतान्तरात्मा । यत मेव सदेकरसमात्मानं विशुद्धविज्ञानरूपं नामरूपाद्यशुद्धोपाधिभेदवशेन अनेकप्रकारं यः करोति स्वात्मसत्तामात्रेणाचिन्त्यशक्तित्वात् तमात्मस्थं स्वः हृदयाकाशे बुद्धौ चैतन्याकारेणाभिव्यक्तमित्येतत् । न हि शरीरस्याधार

मनः । आकाशवदमूर्तत्वात् । आदर्शस्थं मुखमिति यद्वत् । तमेतमीश्वरमात्मानं ये निवृत्तबाह्यवृत्तयोऽनुपश्यन्ति आचार्यागमोपदेशमनु साक्षादनुभवन्ति धीरा विवेकिनः तेषां परमेश्वरभूतानां शाश्वतं नित्यं सुखमात्मानंदलक्षणं भवति, नेतरेषां बाह्यासक्तबुद्धीनामविवेकिनां स्वात्मभूतमपि अविद्याव्यवधानात् ॥

**नित्योऽनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥१३॥**

किंच नित्योऽविनाश्यनित्यानां विनाशिनाम् । चेतनश्चेतनानां चेतयितॄणां ब्रह्मादीनां प्राणिनां अग्निनिमित्तमिव दाहकत्वमनग्नीनामुदकादीनामात्मचैतन्यनिमित्तमेव चेतयितृत्वमन्येषाम् । किंच स सर्वज्ञः सर्वेश्वरः कामिनां संसारिणां कर्मानुरूपं कामान्कर्मफलानि स्वानुग्रहनिमित्तांश्च कामान्य एको बहूनामनेकेषामनायासेन विदधाति प्रयच्छतीत्येतत् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिरुपरतिः शाश्वती नित्या स्वात्मभूतैव स्यान्नेतरेषामनेवंविधानाम् ॥

**तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।**
**कथं नु तद्विजानीयां किमु भाति विभाति वा ॥१४॥**

यत्तदात्मविज्ञानसुखमनिर्देश्यं निर्देष्टुमशक्यं परमं प्रकृष्टं प्राकृतपुरुषवाङ्मनसयोरगोचरमपि सन्निवृत्तैषणा ये ब्राह्मणास्ते एतत्प्रत्यक्षमेवेति मन्यन्ते, कथं नु केन प्रकारेण तत्सुखमहं विजानीयाम् । इदमित्यात्मबुद्धिविषयमापादयेयं यथा निवृत्तैषणा यतयः । किमु तद्भाति दीप्यते प्रकाशात्मकं तद्यतोऽस्मद्बुद्धिगोचरत्वेन विभाति विस्पष्टं दृश्यते किंवा नेति ॥

**न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥१५॥**

अत्रोत्तरमिदं भाति च विभाति चेति । कथम्? न तत्र तस्मिन्स्वात्मभूते ब्रह्मणि सर्वावभासकोऽपि सूर्यो भाति तद्ब्रह्म न प्रकाशयतीत्यर्थः । तथा न चन्द्रतारकं, नेमा विद्युतो भान्ति, कुतोऽयमस्मद्दृष्टिगोचरोऽग्निः । किं बहुना, यदिदमादिकं सर्वं भाति तत्तमेव परमेश्वरं भान्तं दीप्यमानमनुभात्यनुदीप्यते । यथा जलोल्मुकादि अग्निसंयोगादग्निं दहन्तमनु दहति न स्वतस्तद्वत् । तस्यैव भासा दीप्त्या सर्वमिदं सूर्यादि विभाति । यत एवं तदेव ब्रह्म भाति च विभाति च । कार्यगतेन विविधेन भासा तस्य ब्रह्मणो भारूपत्वं स्वतोऽवगम्यते । नहि

स्वतोऽविद्यमानं भासनमन्यस्य कर्तुं शक्तम् । घटादीनामन्यावभासकत
नाद्भारूपाणां चादित्यादीनां तद्दर्शनात् ॥

इति पंचमी वल्ली ॥

---

तूलावधारणेनैव मूलावधारणं वृक्षस्य यथा क्रियते लोके, एवं संसा
वृक्षावधारणेन तन्मूलस्य ब्रह्मणः स्वरूपावदिधारयिषयेयं षष्ठी वल्ली आरभ्य

**ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः ॥**
**तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।**
**तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन । एतद्वै तत**

ऊर्ध्वमूल ऊर्ध्वं मूलं यत्तद्विष्णोः परमं पदमस्येति सोऽयमव्यक्तादिस्थाव
संसारवृक्ष ऊर्ध्वमूलः । वृक्षश्च व्रश्चनात् । अविच्छिन्नजन्मजरामरणशोकाद
नर्थात्मकः प्रतिक्षणमन्यथास्वभावो मायामरीच्युदकगंधर्वनगरादिवत् दृष्ट
रूपत्वादवसाने च वृक्षवदभावात्मकः कदलीस्तंभवन्निःसारोऽनेकशतपाखंड
विकल्पास्पदः तत्त्वविजिज्ञासुभिरनिर्धारितेदंतत्त्वो वेदान्तनिर्धारितपरब्रह्ममूल
अविद्याकामकर्माव्यक्तबीजप्रभवः अपरब्रह्मविज्ञानक्रियाशक्तिद्वयात्मकहिरण्य
कुरः सर्वप्राणिलिंगभेदस्कंधः तत्तत्तृष्णाजलासेकोद्भूतदर्पो बुद्धीन्द्रियविषयप्र
कुरः श्रुतिस्मृतिन्यायविद्योपदेशपलाशो यज्ञदानतपआद्यनेकक्रियासुपुष्पः
दुःखवेदनानेकरसः प्राण्युपजीव्यानंतफलः तत्तृष्णासलिलावसेकप्ररूढजटिल
दृढबद्धमूलः सत्यनामादिसप्तलोकब्रह्मादिभूतपक्षिकृतनीडः प्राणिसुखदुःखो
हर्षशोकजातनृत्यगीतवादित्रक्ष्वेलितास्फोटितहसिताकृष्टरुदितहाहामुंचमुंचेत्याद
शब्दकृततुमुलीभूतमहारवो वेदान्तविहितब्रह्मात्मदर्शनासंगशस्त्रकृतोच्छेद
संसारवृक्षोऽश्वत्थोऽश्वत्थवत्कामकर्मवातेरितनित्यप्रचलितस्वभावः । स्वर्गनरक
कप्रेतादिभिः शाखाभिरवाक्शाखः । सनातनोऽनादित्वाच्चिरं प्रवृत्तः । य
संसारवृक्षस्य मूलं तदेव शुक्रं शुभ्रं शुद्धं ज्योतिष्मच्चैतन्यात्मज्योतिःस्वभावं
ब्रह्म सर्वमहत्त्वात् । तदेवामृतमविनाशस्वभावमुच्यते कथ्यते सत्यत्वात् । व
रंभणं विकारो नामधेयमनृतमन्यदतो मर्त्यम् । तस्मिन्परमार्थसत्ये ब्रह्मणि
गंधर्वनगरमरीच्युदकमायासमाः परमार्थदर्शनाभावावगमनाः श्रिता आश्रि
सर्वे समस्ता उत्पत्तिस्थितिलयेषु । तदु तद्ब्रह्म नात्येति नातिवर्तते मृदा
मिव घटादिकार्यं कश्चन कश्चिदपि विकारः । एतद्वै तत् ॥

**यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम् ।**
**महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥२॥**

यद्विज्ञानादमृता भवन्तीत्युच्यते, जगतो मूलं तदेव नास्ति ब्रह्म असत
ःसृतमिति तन्न । यदिदं किंच यत्किंचेदं जगत्सर्वं प्राणे परस्मिन्ब्रह्मणि
ो कंपते, तत एव निःसृतं निर्गतं सत्प्रचलति नियमेन चेष्टते । यदेवं जग-
दिकारणं ब्रह्म तन्महद्भयम् । महच्च तद्भयं च बिभेत्यस्मादिति महद्भ-
ज्रमुद्यतमुद्यतमिव वज्रम् । यथा वज्रोद्यतकरं स्वामिनमभिमुखीभूतं
भृत्या नियमेन तच्छासने वर्तन्ते, तथेदं चंद्रादित्यग्रहनक्षत्रतारकादिलक्षणं
ारं नियमेन क्षणमप्यविश्रान्तं वर्तत इत्युक्तं भवति । य एतद्विदुः स्वात्म-
ाक्षिभूतमेकं ब्रह्मामृता अमरणधर्माणस्ते भवन्ति ॥

**भयादस्याग्निस्तपति भयात्तपति सूर्यः ।**
**भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचमः ॥३॥**

कथं तद्भयाज्जगद्वर्तते इत्याह— भयाद्भीत्यास्य परमेश्वरस्याग्निस्तपति, भया-
सूर्यो, भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचमः । न हीश्वराणां लोकपालानां
ं सतां नियन्ता चेद्वज्रोद्यतकरवन्न स्यात्स्वामिभयभीतानामिव भृत्यानां
प्रवृत्तिरुपपद्यते ॥

**इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः ।**
**ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥४॥**

त्चेह जीवन्नेव चेद्यद्यशकच्छक्नोति शक्तः सन् जानात्येतद्भयकारणं ब्रह्म
गन्तुं प्राक्पूर्वं शरीरस्य विस्रसोऽवस्रंसनात्पतनात्संसारबंधनाद्विमुच्यते ।
ाकद्बोद्धुं, ततोऽनवबोधात्सर्गेषु, सृज्यन्ते येषु स्रष्टव्याः प्राणिन इति
थिव्यादयो लोकास्तेषु सर्गेषु लोकेषु शरीरत्वाय शरीरभावाय कल्पते
भवति शरीरं गृह्णातीत्यर्थः ॥ तस्माच्छरीरविस्रंसनात्प्रागात्मावबोधाय
स्थेयः ॥ यस्मादिहैवात्मनो दर्शनमादर्शस्थस्येव मुखस्य स्पष्टमुपपद्यते
न्तरेषु ब्रह्मलोकादन्यत्र स च दुष्प्रापः । कथमित्युच्यते—

**थादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके ।**
**थाप्सु परीव ददृशे तथा गंधर्वलोके छायातपयोरिव ब्रह्मलोके ॥५॥**

थादर्शे प्रतिबिंबभूतमात्मानं पश्यति लोकोऽत्यंतविविक्तं, तथेहात्मनि

स्वबुद्धावादर्शवन्निर्मलीभूतायां विविक्तमात्मनो दर्शनं भवतीत्यर्थः । य
अविविक्तं जाग्रद्वासनोद्भूतं, तथा पितृलोकेऽविविक्तमेव दर्शनमात्मनः क
भोगासक्तत्वात् । यथा चाप्स्वविविक्तावयवमात्मरूपं परीव ददृशे परिद
तथा गंधर्वलोकेऽविविक्तमेव दर्शनमात्मनः । एवं च लोकान्तरेष्वपि शा
ण्यादवगम्यते । छायातपयोरिवात्यंतविविक्तं ब्रह्मलोक एवैकस्मिन् ।
दुष्प्रापेऽत्यंतविशिष्टकर्मज्ञानसाध्यत्वात् । तस्मादात्मदर्शनायेहैव यत्नः
इत्यभिप्रायः ॥

**इंद्रियाणां पृथग्भावमुदयास्तमयौ च तत् ।**
**पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥६॥**

कथमसौ बोद्धव्यः किं वा तदवबोधे प्रयोजनमित्युच्यते— इंद्रियाण
दीनां स्वस्वविषयग्रहणप्रयोजनेन स्वकारणेभ्य आकाशादिभ्यः पृथगुत्
नामत्यंतविशुद्धात्केवलाच्चिन्मात्रात्मस्वरूपात्पृथग्भावं स्वभावविलक्षणात्मक
तेषामेवेंद्रियाणामुदयास्तमयौ चोत्पत्तिप्रलयौ जाग्रत्स्वप्नावस्थापेक्षया नात्मन
मत्वा ज्ञात्वा विवेकतो धीरो धीमान्न शोचति । आत्मनो नित्यैकस्वभावत
चाराच्छोककारणत्वानुपपत्तेः । तथा च श्रुत्यंतरं 'तरति शोकमात्मवित्'

**इंद्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।**
**सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥७॥**

यस्मादात्मन इंद्रियाणां पृथग्भाव उक्तो नासौ बहिरधिगन्तव्यो यस
गात्मा स सर्वस्य, तत्कथमित्युच्यते—इंद्रियेभ्यः परं मन इत्यादि ।
मिहेंद्रियसमानजातीयत्वादिंद्रियग्रहणेनैव ग्रहणम् । पूर्ववदन्यत् । सत्त्व
बुद्धिरिह ॥

**अव्यक्तात्तु परः पुरुषो व्यापकोऽलिंग एव च ।**
**यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥८॥**

अव्यक्तात्तु परः पुरुषो व्यापको, व्यापकस्याप्याकाशादेः सर्वस्य का
अलिंगो लिंग्यते गम्यते येन तल्लिंगं बुद्ध्यादि, तदविद्यमानं यस्य सोऽ
एव च । सर्वसंसारधर्मवर्जित इत्येतत् । यं ज्ञात्वाचार्यतः शास्त्रतश्च मुच्यते
अविद्यादिहृदयग्रंथिभिर्जीवन्नेव, पतितेऽपि शरीरेऽमृतत्वं च गच्छति । सो
परोऽव्यक्तात्पुरुष इति पूर्वेणैव संबंधः ॥

**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥९॥**

कथं तर्हि तस्यालिंगस्य दर्शनमुपपद्यत इत्युच्यते—न संदृशे संदर्शनविषये तिष्ठति प्रत्यगात्मनोऽस्य रूपम् । अतो न चक्षुषा सर्वेंद्रियेण, चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्, पश्यति नोपलभते कश्चन कश्चिदप्येनं प्रकृतमात्मानम् । कथं र्हि तं पश्येदित्युच्यते—हृदा हृत्स्थया बुद्धया । मनीषा मनसः संकल्पादिरूपप्रेष्टे नियन्तृत्वेनेति मनीट् तथा मनीषाऽविकल्पयित्र्या बुद्धया । मनसा मननरूपेण सम्यग्दर्शनेन अभिक्लृप्तोऽभिसमर्थितोऽभिप्रकाशित इत्येतत् । आत्मा तुं शक्य इति वाक्यशेषः । तमात्मानं ब्रह्मैतद्ये विदुरमृतास्ते भवन्ति ॥

**यदा पंचावतिष्ठन्ते ज्ञानानि मनसा सह ।**
**बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥१०॥**

सा हृन्मनीट् कथं प्राप्यत इति तदर्थो योग उच्यते—यदा यस्मिन्काले स्वविषयेभ्यो निवर्तितान्यात्मन्येव पंच ज्ञानानि । ज्ञानार्थत्वाच्छ्रोत्रादीनींद्रियाणि नान्युच्यन्ते । अवतिष्ठन्ते सह मनसा यदनुगतानि, तेन संकल्पादिव्यावृत्तेन्तःकरणेन । बुद्धिश्चाध्यवसायलक्षणा न विचेष्टति स्वव्यापारेषु न विचेष्टते न ाम्रियते, तामाहुः परमां गतिम् ॥

**तां योगमिति मन्यन्ते स्थिरामिंद्रियधारणाम् ।**
**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥११॥**

तामीदृशीं तदवस्थां योगमिति मन्यन्ते वियोगमेव सन्तम् । सर्वानर्थसंयोगवियोगलक्षणा हीयमवस्था योगिनः । एतस्यां ह्यवस्थायामविद्याध्यारोपणवतस्वरूपप्रतिष्ठ आत्मा । स्थिरामिंद्रियधारणां स्थिरामचलामिंद्रियधारणां बाह्यांकरणानां धारणमित्यर्थः । अप्रमत्तः प्रमादवर्जितः समाधानं प्रति नित्यं यत्नस्तदा तस्मिन्काले, यदैव प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते । न हि ध्यादिचेष्टाभावे प्रमादसंभवोऽस्ति । तस्मात्प्रागेव बुद्धयादिचेष्टोपरमादप्रमादो गीयते । अथवा यदैवेंद्रियाणां स्थिरा धारणा, तदानीमेव निरंकुशमप्रत्वमित्यतोऽभिधीयतेऽप्रमत्तस्तदा भवतीति । कुतः । योगो हि यस्मात्प्राप्ययौ उपजनापायधर्मक इत्यर्थः । अतोऽपायपरिहारायाप्रमादः कर्तव्य ाभिप्रायः ॥

स्वबुद्धावादर्शवन्निर्मलीभूतायां विविक्तमात्मनो दर्शनं भवतीत्यर्थः । अविविक्तं जाग्रद्वासनोद्भूतं, तथा पितृलोकेऽविविक्तमेव दर्शनमात्मनः भोगासक्तत्वात् । यथा चाप्स्वविविक्तावयवमात्मरूपं परीव ददृशे परि तथा गंधर्वलोकेऽविविक्तमेव दर्शनमात्मनः । एवं च लोकान्तरेष्वपि ण्यादवगम्यते । छायातपयोरिवात्यंतविविक्तं ब्रह्मलोक एवैकस्मिन् दुष्प्रापोऽत्यंतविशिष्टकर्मज्ञानसाध्यत्वात् । तस्मादात्मदर्शनायैहैव यत्न इत्यभिप्रायः ॥

**इंद्रियाणां पृथग्भावमुदयास्तमयौ च तत् ।**
**पृथगुत्पद्यमानानां मत्वा धीरो न शोचति ॥६॥**

कथमसौ बोद्धव्यः किं वा तदवबोधे प्रयोजनमित्युच्यते– इंद्रिया दीनां स्वस्वविषयग्रहणप्रयोजनेन स्वकारणेभ्य आकाशादिभ्यः पृथगु नामत्यंतविशुद्धात्केवलाच्चिन्मात्रात्मस्वरूपात्पृथग्भावं स्वभावविलक्षणात्म तेषामेवेंद्रियाणामुदयास्तमयौ चोत्पत्तिप्रलयौ जाग्रत्स्वप्नावस्थापेक्षया नात्म मत्वा ज्ञात्वा विवेकतो धीरो धीमान्न शोचति । आत्मनो नित्यैकस्वभाव चाराच्छोककारणत्वानुपपत्तेः । तथा च श्रुत्यंतरं 'तरति शोकमात्मवित्'

**इंद्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् ।**
**सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् ॥७॥**

यस्मादात्मन इंद्रियाणां पृथग्भाव उक्तो नासौ बहिरधिगन्तव्यो य गात्मा स सर्वस्य, तत्कथमित्युच्यते—इंद्रियेभ्यः परं मन इत्यादि । मिहेंद्रियसमानजातीयत्वादिंद्रियग्रहणेनैव ग्रहणम् । पूर्ववदन्यत् । सत्त्व बुद्धिरिह ॥

**अव्यक्तात्तु परः पुरुषो व्यापकोऽलिंग एव च ।**
**यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥८॥**

अव्यक्तात्तु परः पुरुषो व्यापको, व्यापकस्याप्याकाशादेः सर्वस्य का अलिंगो लिंग्यते गम्यते येन तल्लिंगं बुद्ध्यादि, तदविद्यमानं यस्य सोऽ एव च । सर्वसंसारधर्मवर्जित इत्येतत् । यं ज्ञात्वाचार्यतः शास्त्रतश्च मुच्यते अविद्यादिहृदयग्रंथिभिर्जीवन्नेव, पतितेऽपि शरीरेऽमृतत्वं च गच्छति । सो परोऽव्यक्तात्पुरुष इति पूर्वेणैव संबंधः ॥

**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।**
**हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥९॥**

कथं तर्हि तस्यालिंगस्य दर्शनमुपपद्यत इत्युच्यते—न संदृशे संदर्शनविषये तिष्ठति प्रत्यगात्मनोऽस्य रूपम् । अतो न चक्षुषा सर्वेंद्रियेण, चक्षुर्ग्रहणस्योपलक्षणार्थत्वात्, पश्यति नोपलभते कश्चन कश्चिदप्येनं प्रकृतमात्मानम् । कथं तर्हि तं पश्येदित्युच्यते—हृदा हृत्स्थया बुद्ध्या । मनीषा मनसः संकल्पादिरूपस्येष्टे नियन्तृत्वेनेति मनीट् तथा मनीषाऽविकल्पयित्र्या बुद्ध्या । मनसा मननरूपेण सम्यग्दर्शनेन अभिक्लृप्तोऽभिसमर्थितोऽभिप्रकाशित इत्येतत् । आत्मा ज्ञातुं शक्य इति वाक्यशेषः । तमात्मानं ब्रह्मैतद्ये विदुरमृतास्ते भवन्ति ॥

**यदा पंचावतिष्ठन्ते ज्ञानानि मनसा सह ।**
**बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥१०॥**

सा हृन्मनीट् कथं प्राप्यत इति तदर्थो योग उच्यते—यदा यस्मिन्काले स्वविषयेभ्यो निवर्तितान्यात्मन्येव पंच ज्ञानानि । ज्ञानार्थत्वाच्छ्रोत्रादीनींद्रियाणि ज्ञानान्युच्यन्ते । अवतिष्ठन्ते सह मनसा यदनुगतानि, तेन संकल्पादिव्यावृत्तेनान्तःकरणेन । बुद्धिश्चाध्यवसायलक्षणा न विचेष्टति स्वव्यापारेषु न विचेष्टते न व्याप्रियते, तामाहुः परमां गतिम् ॥

**तां योगमिति मन्यन्ते स्थिरामिंद्रियधारणाम् ।**
**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥११॥**

तामीदृशीं तदवस्थां योगमिति मन्यन्ते वियोगमेव सन्तम् । सर्वानर्थसंयोगवियोगलक्षणा हीयमवस्था योगिनः । एतस्यां ह्यवस्थायामविद्याध्यारोपणवर्जितस्वरूपप्रतिष्ठ आत्मा । स्थिरामिंद्रियधारणां स्थिरामचलामिंद्रियधारणां बाह्यान्तःकरणानां धारणमित्यर्थः । अप्रमत्तः प्रमादवर्जितः समाधानं प्रति नित्यं यत्नवांस्तदा तस्मिन्काले, यदैव प्रवृत्तयोगो भवतीति सामर्थ्यादवगम्यते । न हि बुद्ध्यादिचेष्टाभावे प्रमादसंभवोऽस्ति । तस्मात्प्रागेव बुद्ध्यादिचेष्टोपरमादप्रमादो विधीयते । अथवा यदैवेंद्रियाणां स्थिरा धारणा, तदानीमेव निरंकुशमप्रमत्तत्वमित्यतोऽभिधीयतेऽप्रमत्तस्तदा भवतीति । कुतः । योगो हि यस्मात्प्रभवाप्ययौ उपजनापायधर्मक इत्यर्थः । अतोऽपायपरिहारायाप्रमादः कर्तव्य इत्यभिप्रायः ॥

**नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा ।**
**अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥१२॥**

बुद्ध्यादिचेष्टाविषयं चेत् ब्रह्मेदं तदिति विशेषतो गृह्येत, बुद्ध्याद्युपरमे च ग्रहणकारणाभावादनुपलभ्यमानं नास्त्येव ब्रह्म । यद्धि करणगोचरं तदस्तीति प्रसिद्धं लोके विपरीतं चासदिति । उतश्चानर्थको योगोऽनुपलभ्यमानत्वाद्वा नास्तीत्युपलब्धव्यं ब्रह्मेत्येवं प्राप्त इदमुच्यते । सत्यम् । नैव वाचा न मनसा न चक्षुषा नान्यैरपींद्रियैः प्राप्तुं शक्यत इत्यर्थः । तथापि सर्वविशेषरहितोऽपि जगतो मूलमित्यवगतत्वादस्त्येव, कार्यप्रविलापनस्यास्तित्वनिष्ठत्वात् । तथा हीदं कार्यं सूक्ष्मतारतम्यपारंपर्येणानुगम्यमानं सद्बुद्धिनिष्ठामेवावगमयति । यदापि विषयप्रविलापनेन प्रविलाप्यमाना बुद्धिः तदापि सा सत्प्रत्ययगर्भैव विलीयते । बुद्धिर्हि नः प्रमाणं सदसतोर्याथात्म्यावगमे । मूलं चेज्जगतो न स्यात् असदन्वितमेवेदं कार्यमसदसदित्येव गृह्येत, न त्वेतदस्ति, सत्सदित्येव तु गृह्यते, यथा मृदादिकार्यं घटादि मृदाद्यन्वितम् । तस्माज्जगतो मूलमात्मास्तीत्येवोपलब्धव्यः । कस्मात् । अस्तीति ब्रुवतोऽस्तित्ववादिनः आगमार्थानुसारिणः श्रद्दधानादन्यत्र नास्तिकवादिनि नास्ति जगतो मूलमात्मा निरन्वयमेवेदं कार्यमभावान्तं प्रविलीयत इति मन्यमाने विपरीतदर्शिनि, कथं तद्ब्रह्म तत्त्वत उपलभ्यते, न कथंचनोपलभ्यत इत्यर्थः ॥

**अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।**
**अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥१३॥**

तस्मादपोह्यासद्वादिपक्षमासुरं अस्तीत्येवात्मोपलब्धव्यः सत्कार्यबुद्ध्याद्युपाधिभिः । यदा तु तद्रहितोऽविक्रिय आत्मा कार्यं च कारणव्यतिरेकेण नास्ति 'वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' इति श्रुतेः, तदा तस्य निरुपाधिकस्यालिंगस्य सदसदादिप्रत्ययविषयत्ववर्जितस्यात्मनस्तत्त्वभावो भवति । तेन च रूपेणात्मोपलब्धव्य इत्यनुवर्तते । तत्राप्युभयोः सोपाधिकनिरुपाधिकयोरस्तित्वतत्त्वभावयोः—निर्धारणार्था षष्ठी—पूर्वमस्तीत्येवोपलब्धस्यात्मनः सत्कार्योपाधिकृतास्तित्वप्रत्ययेनोपलब्धस्येत्यर्थः । पश्चात्प्रत्यस्तमितसर्वोपाधिरूप आत्मनस्तत्त्वभावो विदिताविदिताभ्यामन्योऽद्वयस्वभावो 'नेति नेति' 'अस्थूलमनण्वह्रस्वं' 'अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' इत्यादिश्रुतिनिर्दिष्टः प्रसीदत्यभिमुखीभवति । आत्मप्रकाशनाय पूर्वमस्तीत्युपलब्धवत इत्येतत् ॥

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥१४॥**

परमार्थात्मदर्शिनो यदा यस्मिन्काले सर्वे कामाः कामयितव्यस्यान्य- मुच्यन्ते विशीर्यन्ते, येऽस्य प्राक्प्रतिबोधाद्विदुषो हृदि बुद्धौ श्रिता बुद्धिर्हि कामानामाश्रयो नात्मा 'कामः संकल्प' इत्यादिश्रुत्यंतराच्च । मर्त्यः प्राक्प्रबोधादासीत्स प्रबोधोत्तरकालमविद्याकामकर्मलक्षणस्य ादमृतो भवति, गमनप्रयोजकस्य मृत्योर्विनाशाद्गमनानुपपत्तेः । अत्रैहैव वत्सर्वबंधनोपशमात् ब्रह्म समश्नुते ब्रह्मैव भवतीत्यर्थः ॥

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रंथयः ।**
**अथ मर्त्योऽमृतो भवत्येतावद्ध्यनुशासनम् ॥१५॥**

पुनः कामानां मूलतो विनाश इत्युच्यते—यदा सर्वे प्रभिद्यन्ते भेदमु- ाद्यन्ति हृदयस्य बुद्धेरिह जीवत एव ग्रंथयो ग्रंथिवत् दृढबंधनरूपा ा इत्यर्थः । अहमिदं शरीरं ममेदं धनं सुखी दुःखी चाहमित्येवमा- द्विपरीतब्रह्मात्मप्रत्ययोपजननात् ब्रह्मैवाहमस्म्यसंसारीति विनष्टेष्ववि- ित्तनिमित्ताः कामा मूलतो विनश्यन्ति । अथ मर्त्योऽमृतो भवत्येताव- ावन्मात्रं नाधिकमस्तीत्याशंका कर्तव्या । अनुशासनमनुशिष्टिरुप- न्तानामिति वाक्यशेषः ॥

**तं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।**
**योर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥१६॥**

शेषविशेषव्यापिब्रह्मात्मप्रतिपत्त्या प्रभिन्नसमस्ताविद्यादिग्रंथेर्जीवत एव दुषो न गतिर्विद्यते 'अत्र ब्रह्म समश्नुते' इत्युक्तत्वात् 'न तस्य प्राणा ह्मैव सन्ब्रह्माप्येति' इति श्रुत्यंतराच्च । ये पुनर्मंदब्रह्मविदो विद्यान्तरशी- ाकभाजो ये च तद्विपरीताः संसारभाजः, तेषामेष गतिविशेष उच्यते विद्याफलस्तुतये । किंचान्यदग्निविद्या पृष्टा प्रत्युक्ता च । तस्याश्च ा वक्तव्य इति मंत्रारंभः । तत्र—शतं च शतसंख्याका एका च पुरुषस्य हृदयाद्विनिःसृता नाड्यः शिराः, तासां मध्ये मूर्धानं सृता निर्गता एका सुषुम्ना नाम । तयाऽन्तकाले हृदय आत्मा- योजयेत् । तया नाड्योर्ध्वमुपर्यायन्गच्छन्नादित्यद्वारेणामृतत्वममरण-

धर्मत्वमापेक्षिकम्—"आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति स्मृतेः- ब्रह्मणा वा सह कालान्तरेण मुख्यममृतत्वमेति भुक्त्वा भोगाननुपमान्ब्रह्मलोगतान् । विष्वङ्नानाविधगतयोऽन्या नाड्य उत्क्रमणे भवन्ति संसारप्रतिपत्त्य एव भवन्तीत्यर्थः ॥

अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ॥
तं स्वाच्छरीरात्प्रवृहेन्मुंजादिवेषीकां धैर्येण ।
तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥१७॥

इदानीं सर्ववल्ल्यर्थोपसंहारार्थमाह—अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जना संबंधिनि हृदये संनिविष्टो यथाव्याख्यातः, तं स्वादात्मीयाच्छरीरात्प्रवृहेदुद्यच्छेत् ष्कर्षेत्पृथक्कुर्यादित्यर्थः । किमिवेत्युच्यते—मुंजादिवेषीकामंतःस्थां धैर्येणाप्रम देन । तं शरीरान्निष्कृष्टं चिन्मात्रं विद्याद्विजानीयाच्छुक्रं शुद्धममृतं यथोक्तं ब्रह्मेति द्विर्वचनमुपनिषत्परिसमाप्त्यर्थमितिशब्दश्च ॥

मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् ।
ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥१८॥

विद्यास्तुत्यर्थोऽयमाख्यायिकार्थोपसंहारोऽधुनोच्यते— मृत्युप्रोक्तां एतां यथोक्त ब्रह्मविद्यां योगविधिं च कृत्स्नं समस्तं सोपकरणं सफलमित्येतत् । नचिकेतोऽ वरप्रदानान्मृत्योर्लब्ध्वा प्राप्येत्यर्थः । किं? ब्रह्म प्राप्तोऽभून्मुक्तोऽभवदित्यर्थः कथम्? विद्याप्राप्त्या विरजो विगतधर्माधर्मो विमृत्युर्विगतकामाविद्यश्च सन्पूर्व मित्यर्थः । न केवलं नचिकेता एवान्योऽपि य एवं नचिकेतोवदात्मविदध्यात्मम निरुपचरितं प्रत्यक्स्वरूपं प्राप्य तत्त्वमेवेत्यभिप्रायः । नान्यद्रूपमप्रत्यग्रूपम् । तदे वमध्यात्ममेवमुक्तप्रकारेण वेद विजानातीत्येवंवित्सोऽपि विरजाः सन्ब्रह्म प्राप् विमृत्युर्भवतीति वाक्यशेषः ॥

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ॥ तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥१९॥ ॐ शान्तिः शान्तिः शान्तिः ।

इति काठकोपनिषदि द्वितीयाध्याये तृतीया वल्ली ॥

शिष्याचार्ययोः प्रमादकृतान्यायेन विद्याग्रहणप्रतिपादननिमित्तदोषप्रशमना र्थेयं शान्तिरुच्यते—सह नावावामवतु पालयतु विद्यास्वरूपप्रकाशनेन । कः? स एव परमेश्वर उपनिषत्प्रकाशितः । किंच सह नौ भुनक्तु तत्फलप्रकाशनेन नौ

। सहैवावां विद्याकृतं वीर्यं सामर्थ्यं करवावहै निष्पादयावहै । किंच
नौ तेजस्वि नौरावयोर्यदधीतं तत्स्वधीतमस्तु । अथवा तेजस्वि नावा-
दधीतं तदतीव तेजस्वि वीर्यवदस्त्वित्यर्थः । मा विद्विषावहै शिष्याचा-
र्यं प्रमादकृतान्यायाध्ययनाध्यापनदोषनिमित्तं द्वेषं मा करवावहै इत्यर्थः ।
शान्तिः शान्तिरिति त्रिर्वचनं सर्वदोषोपशमनार्थमित्योमिति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपाद-
शिष्यस्य श्रीशंकरभगवतः कृतौ काठकोपनिषद्भाष्यं समाप्तम् ॥

---

॥ ॐ ॥

श्रीमच्छंकराचार्यविरचितेन पदभाष्येन युता

# केनोपनिषत् ।



ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै । तेजस्वि नावधीतम मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ आप्यायन्तु ममांग वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिंद्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माहं निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि नि य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्ति

केनेषितमित्याद्योपनिषत्परब्रह्मविषया वक्तव्येति नवमस्याध्यायस्यारंभः प्रागेतस्मात्कर्माण्यशेषतः परिसमापितानि, समस्तकर्माश्रयभूतस्य च प्राणस्य पासनान्युक्तानि, कर्मांगसामविषयाणि च । अनंतरं च गायत्रसामविषयं दर्श वंशान्तमुक्तं कार्यम् । सर्वमेतद्यथोक्तं कर्म च ज्ञानं च सम्यगनुष्ठितं निष्कामः मुमुक्षोः सत्त्वशुद्ध्यर्थं भवति । सकामस्य तु ज्ञानरहितस्य केवलानि श्रौता स्मार्तानि च कर्माणि दक्षिणमार्गप्रतिपत्तये पुनरावृत्तये च भवन्ति । स्वाभाविक त्वशास्त्रीयया प्रवृत्त्या पश्वादिस्थावरान्ताधोगतिः स्यात् । "अथैतयोः पथो कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्व त्येतत्तृतीयं स्थानम् ।" इति श्रुतेः, "प्रजा ह तिस्रो अत्यायमीयुः" इति मंत्र वर्णात् । विशुद्धसत्त्वस्य तु निष्कामस्यैव बाह्यादनित्यात्साध्यसाधनसंबंधादि कृतात्पूर्वकृताद्वा संस्कारविशेषोद्भवाद्विरक्तस्य प्रत्यगात्मविषया जिज्ञासा प्रवर्तते तदेतद्वस्तु प्रश्नप्रतिवचनलक्षणया श्रुत्या प्रदर्श्यते केनेषितमित्याद्यया । काठ चोक्तम्–'परांचि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन् । कश्चि द्धीरः प्रत्यगात्मनमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इत्यादि । 'परीक्ष्य लोकान्कर्म चितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छे त्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' इत्याद्याथर्वणे च । एवं विरक्तस्य प्रत्यगात्म विषयं विज्ञानं श्रोतुं मन्तुं विज्ञातुं च सामर्थ्यमुपपद्यते नान्यथा । एतस्मा प्रत्यगात्मब्रह्मविज्ञानात्संसारबीजमज्ञानं कामकर्मप्रवृत्तिकारणमशेषतो निवर्तते

सर्वं वागाद्यग्न्यादि चान्नान्नादत्वसंस्तुतं जगदेकीकृत्य षोडशधा प्रवि-य तस्मिन्ब्रह्मदृष्टिर्विधातव्येत्यारभ्यते । श्रद्धातपसोर्ब्रह्मोपासनांगत्वप्रदर्शनाय ख्यायिका । सत्यकामो ह नामतो, हशब्द ऐतिह्यार्थो, जबालाया अपत्यं बालो जबालां स्वां मातरमामंत्रयांचक्र आमंत्रितवान् । ब्रह्मचर्यं स्वाध्याय-णाय हे भवति विवत्स्याम्याचार्यकुले, किंगोत्रोऽहं किमस्य मम गोत्रं सोऽहं गोत्रो न्वहमस्मीति ॥

सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परि-रिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति ॥२॥

एवं पृष्टा जबाला सा हैनं पुत्रमुवाच— नाहमेतत्तव गोत्रं वेद हे तात गोत्रस्त्वमसि । कस्मान्न वेत्सीत्युक्ताह— बहु भर्तृगृहे परिचर्याजातमतिथ्य-भ्यागतादि चरन्त्यहं परिचारिणी परिचरन्तीति परिचरणशीलैवाहं, परिचरण-चित्ततया गोत्रादिस्मरणे मम मनो नाभूत् । यौवने च तत्काले त्वामलभे लब्धवत्यस्मि । तदैव ते पितोपरतः । अतोऽनाथाहं, साहमेतन्न वेद यद्गोत्रः त्वमसि । जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि, स त्वं सत्यकाम एवाहं जाबालोऽस्मीत्याचार्याय ब्रुवीथाः । यद्याचार्येण पृष्ट इत्याभिप्रायः ॥

स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥३॥ तं होवाच किंगोत्रो नु सोम्यासीति स होवाच नाह-मेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरं सा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहं सत्यकामो जाबालोऽस्मि भो इति ॥४॥

स ह सत्यकामो हारिद्रुमतं हारिद्रुमतोऽपत्यं हारिद्रुमतं गौतमं गोत्रत एत्य गत्वोवाच— ब्रह्मचर्यं भगवति पूजावति त्वयि वत्स्याम्यत उपेयामुपगच्छेयं शिष्यतया भगवन्तमित्युक्तवन्तं तं होवाच गौतमः । किंगोत्रो नु सोम्यासीति । विज्ञातकुलगोत्रः शिष्य उपनेतव्यः । इति पृष्टः प्रत्याह सत्यकामः । स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि । किं त्वपृच्छं पृष्टवानस्मि मातरम् । सा मया

पृष्टा मां प्रत्यब्रवीन्माता । बह्वहं चरन्तीत्यादि पूर्ववत् । तस्या अहं वचः स
सोऽहं सत्यकामो जाबालोऽस्मि भो इति ॥

**तं होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निरा वाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तेये ह वर्षगणं प्रोवास ता यदा सहस्रं संपेदुः ॥५॥ इति चतुर्थः खंडः॥**

तं होवाच गौतमो नैतद्वचोऽब्राह्मणो विशेषेण वक्तुमर्हत्यार्जवार्थसं ऋजवो हि ब्राह्मणा नेतरे स्वभावतः । यस्मान्न सत्याद्ब्राह्मणजातिधर्मादगा तवानसि, अतो ब्राह्मणं त्वामुपनेष्ये । अतः संस्कारार्थं होमाय समिधं सो त्युक्त्वा तमुपनीय कृशानामबलानां गोयूथान्निराकृत्यापकृष्य चतुःशताः शतानि गवामुवाच— इमा गाः सोम्यानुसंव्रजानुगच्छ । इत्युक्तस्ता प्रत्यभिप्रस्थापयन्नुवाच— नासहस्रेणापूर्णेन सहस्रेण नावर्तेय न प्रत्यागच्छे स एवमुक्त्वा गा अरण्यं तृणोदकबहुलं द्वंद्वरहितं प्रवेश्य स ह वर्षगण प्रोवास प्रोषितवान् । ताः सम्यग्गावो रक्षिता यदा यस्मिन्काले सहस्र संपन्ना बभूवुः ॥ इति चतुर्थः खंडः ॥

**अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रति प्राप्ताः सोम्य सहस्रं स्मः प्रापय न आचार्यकुलम् ॥१॥**

तमेतं श्रद्धातपोभ्यां सिद्धं वायुदेवता दिक्संबंधिनी तुष्टा सत्यृषभ स्यर्षभभावमापन्नाऽनुग्रहायाथ हैनमृषभोऽभ्युवादाभ्युक्तवान्सत्यकाम३ इति बोध्य । तमसौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ सोम्य सहस्रं स्मः पूर्णा तव प्रतिज्ञाऽतः प्रापय नोऽस्मानाचार्यकुलम् ॥

**ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥२॥**

किंचाहं ब्रह्मणः परस्य ते तुभ्यं पादं ब्रवाणि कथयानि । इत्यु वाच— ब्रवीतु कथयतु मे मह्यं भगवान् । इत्युक्त ऋषभस्तस्मै स होवाच । प्राची दिक्कला ब्रह्मणः पादस्य चतुर्थो भागः । तथा प्रतीची दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य ब्रह्मणः पादश्चतुष्कलश्चतस्रः क

वा यस्य सोऽयं चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम प्रकाशवानित्येव नामाभिधानं यस्य । तथोत्तरेऽपि पादास्त्रयश्चतुष्कला ब्रह्मणः ॥

**स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥३॥ इति पंचमः खंडः ॥**

स यः कश्चिदेवं यथोक्तमेतं ब्रह्मणश्चतुष्कलं पादं विद्वान्प्रकाशवानित्यनेन गुणेन विशिष्टमुपास्ते तस्येदं फलं— प्रकाशवानस्मिँल्लोके भवति प्रख्यातो भवतीत्यर्थः । तथाऽदृष्टं फलं— प्रकाशवतो ह लोकान्देवादिसंबंधिनो मृतः सञ्जयति प्राप्नोति । य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ४.५.—

**अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥१॥**

सोऽग्निस्ते पादं वक्तेत्युपररामर्षभः । स सत्यकामो ह श्वोभूते परेद्युर्नैत्यकं नित्यं कर्म कृत्वा गा अभिप्रस्थापयांचकाराचार्यकुलं प्रति । ताः शनैश्चरन्त्यः आचार्यकुलाभिमुख्यः प्रस्थिता यत्र यस्मिन्काले देशेऽभि सायं निशायामभिसंबभूवुरेकत्राभिमुख्यः संभूताः, तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ऋषभवचो ध्यायन् ॥

**तमग्निरभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥२॥**

तमग्निरभ्युवाद सत्यकाम३ इति संबोध्य । तमसौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ ॥

**ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलान्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनंतवान्नाम ॥३॥**

ब्रह्मणः सोम्य ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच पृथिवी कला अंतरिक्षं कला द्यौः कला समुद्रः कलेत्यात्मगोचरमेव दर्शनमग्निः अब्रवीत् । एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनंतवान्नाम ॥

**स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनंतवानित्युपास्तेऽनंतवानस्मिँल्लोके भवत्यनंतवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं**

**ब्रह्मणोऽनंतवानित्युपास्ते ॥४॥ इति षष्ठः खंडः ॥**

स यः कश्चिद्यथोक्तं पादमनंतवत्त्वेन गुणेनोपास्ते स तथैव तद्गुणो त्यस्मिँल्लोके, मृतश्चानंतवतो ह लोकान्स जयति, य एतमेवमित्यादि पूर्वव इति षष्ठः खंडः ॥ ४.६

**हंसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता भि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चा प्राङुपोपविवेश ॥१॥ तं हंस उपनिपत्याभ्युवाद सत्यकाम३ इति इति ह प्रतिशुश्राव ॥२॥**

सोऽग्निर्हंसस्ते पादं वक्तेत्युक्त्वोपरराम । हंस आदित्यः । शौक्ल्यात सामान्याच्च । स ह श्वोभूत इत्यादि समानम् ॥

**ब्रह्मणः सौम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै चाग्निः कला सूर्यः कला चंद्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः ब्रह्मणो ज्योतिष्मान्नाम ॥३॥ स य एतमेवं विद्वांश्चतुष्कलं पादं ब्र ज्योतिष्मानित्युपास्ते ज्योतिष्मानास्मिँल्लोके भवति ज्योतिष्मतो ह ल जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते इति सप्तमः खंडः ॥**

अग्निः कला सूर्यः कला चंद्रः कला विद्युत्कलैष वै सोम्येति ज्योति यमेव च दर्शनं प्रोवाच अतो हंसस्यादित्यत्वं प्रतीयते । विद्वत्फलं— ज ष्मान्दीप्तियुक्तोऽस्मिँल्लोके भवति । चंद्रादित्यादीनां ज्योतिष्मत एव च लोकाञ्जयति । समानमुत्तरम् ॥ इति सप्तमः खंडः ॥ ४.

**मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता भि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्च प्राङुपोपविवेश ॥१॥**

हंसोऽपि मद्गुष्टे पादं वक्तेत्युपरराम । मद्गुरुदकचरः पक्षी, स चाप्स त्प्राणः । स ह श्वोभूत इत्यादि पूर्ववत् ॥

**तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम३ इति भगव इति ह प्रति ॥२॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै ह प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः**

ग आयतनवान्नाम ॥३॥

स च मद्गुः प्राणः स्वविषयमेव च दर्शनमुवाच प्राणः कलेत्याद्यायतनवा-
र्व नाम । आयतनं नाम मनः सर्वकरणोपहृतानां भोगानां तद्यस्मिन्पादे
त इत्यायतनवान्नाम पादः ॥

स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आय-
नवानस्मिँल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं
ब्रह्मण आयतनवानित्युपास्ते ॥४॥ इति अष्टमः खंडः ॥

तं पादं तथैवोपास्ते यः स आयतनवानाश्रयवानस्मिँल्लोके भवति । तथा-
नवत एव सावकाशाँल्लोकान्मृतो जयति । य एतमेवमित्यादि पूर्ववत् ॥ —

प्राप हाचार्यकुलं तमाचार्योऽभ्युवाद सत्यकाम३ इति भगव इति
प्रतिशुश्राव ॥१॥

स एवं ब्रह्मवित्सन्प्राप ह प्राप्तवानाचार्यकुलम् । तमाचार्योऽभ्युवाद स-
काम ३ इति । भगव इति ह प्रतिशुश्राव ॥

ब्रह्मविदिव वै सोम्य भासि को नु त्वानुशशासेत्यन्ये मनुष्येभ्य इति
प्रतिजज्ञे भगवांस्त्वेव मे कामे ब्रूयात् ॥२॥

ब्रह्मविदिव वै सोम्य भासि । प्रसन्नेंद्रियः प्रहसितवदनश्च निश्चितः कृता-
ब्रह्मविद्भवति । अत आह आचार्यो ब्रह्मविदिव भासीति, को न्विति वितर्क-
वाच कस्त्वामनुशशासेति । स चाह सत्यकामोऽन्ये मनुष्येभ्यः । देवता मा-
शिष्टवत्यः । कोऽन्यो भगवच्छिष्यं मां मनुष्यः सन्ननुशासितुमुत्सहेतेत्यभि-
यः । अतोऽन्ये मनुष्येभ्य इति ह प्रतिजज्ञे प्रतिज्ञातवान् । भगवांस्त्वेव मे
मे ममेच्छायां ब्रूयात्किमन्यैरुक्तेन, नाहं तद्गणयामीत्यभिप्रायः ॥

श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्राप-
ति तस्मै हैतदेवोवाचात्र ह न किंचन वीयायेति वीयायेति ॥३॥

किंच श्रुतं हि यस्मान्मम विद्यत एवास्मिन्नर्थे भगवद्दृशेभ्यो भगवत्समेभ्य
षिभ्यः । आचार्याद्धैव विद्या विदिता साधिष्ठं साधुतमत्वं प्रापति प्राप्नोति इ-
तो भगवानेव ब्रूयादित्युक्त आचार्योऽब्रवीत्तस्मै तामेव दैवतैरुक्तां विद्याम् ।
त्र ह न किंचन षोडशकलविद्यायाः किंचिदेकदेशमात्रमपि न वीयाय न वि-
गमित्यर्थः । द्विरभ्यासो विद्यापरिसमाप्त्यर्थः ॥ इति नवमः खंडः ॥ ४.९.—

पुनर्ब्रह्मविद्यां प्रकारान्तरेण वक्ष्यामीत्यारभते गतिं च तद्विदोऽग्निविद्यां आख्यायिका पूर्ववच्छ्रद्धातपसोर्ब्रह्मविद्यासाधनत्वप्रदर्शनार्था—

**उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास ह द्वादश वर्षाण्यग्नीन्परिचचार स ह स्मान्यानंतेवासिनः समावर्तयंस्स्मैव न समावर्तयति ॥१॥**

उपकोसलो ह वै नामतः कमलस्यापत्यं कामलायनः सत्यकामे ज ब्रह्मचर्यमुवास । तस्य, ह ऐतिह्यार्थः, तस्याचार्यस्य द्वादश वर्षाण्यग्नीन्परि अग्नीनां परिचरणं कृतवान् । स ह स्म आचार्योऽन्यान्ब्रह्मचारिणः स्वा ग्राहयित्वा समावर्तयंस्तमेवोपकोसलमेकं न समावर्तयति स्म ह ॥

**तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिचचारीन्मा त्व परिप्रवोचन्प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासांचक्रे ॥२॥**

तमाचार्यं जायोवाच— तप्तो ब्रह्मचारी कुशलं सम्यगग्नीन्परिच त्परिचरितवान् । भगवांश्चाग्निषु भक्तं न समावर्तयति । अतोऽस्मद्भक्तं न वर्तयतीति ज्ञात्वा त्वामग्नयो मा परिप्रवोचन्गर्हां तव मा कुर्युः । अतः प्र विद्यामिष्टामुपकोसलायेति । तस्मा एवं जाययोक्तोऽपि हाप्रोच्यैवाद किंचित्प्रवासांचक्रे प्रवसितवान् ॥

**स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारि किं नु नाश्नासीति स होवाच बहव इमेऽस्मिन्पुरुषे कामा नान व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥३॥**

स होपकोसलो व्याधिना मानसेन दुःखेनानशितुमनशनं क धृतवान्मनः । तं तूष्णीमग्न्यागारेऽवस्थितमाचार्यजायोवाच— हे ब्रह अशान भुंक्ष्व, किं नु कस्मान्नु कारणान्नाश्नासीति । स होवाच— ब नेकेऽस्मिन्पुरुषेऽकृतार्थे प्राकृते कामा इच्छाः कर्तव्यं प्रति नाना अ तिगमनं येषां व्याधीनां कर्तव्यचिंतानां ते नानात्यया व्याधयः क प्राप्तिनिमित्तानि चित्तदुःखानीत्यर्थः । तैः प्रतिपूर्णोऽस्मि अतो नाशिष्या

**अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीद्ध प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥४॥**

उक्त्वा तूष्णींभूते ब्रह्मचारिणि, अथ हाग्नयः शुश्रूषया वर्जिताः

प्राविष्टाः सन्तस्त्रयोऽपि समूदिरे संभूयोक्तवन्तः । हंतेदानीमस्मै ब्रह्मचारिणे-स्मद्भक्ताय दुःखिताय तपस्विने श्रद्दधानाय सर्वेऽनुशास्मोऽनुप्रब्रवाम ब्रह्मविद्यां त्येवं संप्रधार्य तस्मै होचुरुक्तवन्तः— प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥

**स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥५॥ इति दशमः खंडः ॥**

स होवाच ब्रह्मचारी— विजानाम्यहं यद्भवद्भिरुक्तं प्रसिद्धपदार्थकत्वात्प्राणो ब्रह्मेति । स यस्मिन्सति जीवनं यदपगमे च न भवति तस्मिन्वायुविशेषे लोके रूढोऽतो युक्तं ब्रह्मत्वं तस्य । तेन प्रसिद्धपदार्थकत्वाद्विजानाम्यहं यत्प्राणो ब्रह्मेति । कं च तु खं च न विजानामीति । ननु कंखंशब्दयोरपि सुखाकाशविषयत्वेन प्रसिद्धपदार्थकत्वमेव, कस्माद्ब्रह्मचारिणोऽज्ञानम् ? नूनं सुखस्य कंशब्दवाच्यस्य क्षणप्रध्वंसित्वात्खंशब्दवाच्यस्य चाकाशस्याचेतनस्य कथं ब्रह्मत्वमिति मन्यते । कथं च भगवतां वाक्यमप्रमाणं स्यादिति । अतो न विजानामीत्याह । तमेवमुक्तवन्तं ब्रह्मचारिणं ते हाग्नय ऊचुः— यद्वाव यदेव वयं कमवोचाम तदेव खमाकाशमित्येवं खेन विशेष्यमाणं कं विषयेंद्रियसंयोगजात्सुखान्निवर्तितं स्यात् नीलेनेव विशेष्यमाणमुत्पलं रक्तादिभ्यः । यदेव खमित्याकाशमवोचाम तदेव च कं सुखमिति जानीहि । एवं च सुखेन विशेष्यमाणं खं भौतिकादचेतनात्खान्निवर्तितं स्यात् नीलोत्पलवदेव । सुखमाकाशस्थं नेतरल्लौकिकं, आकाशं च सुखाश्रयं नेतरद्भौतिकमित्यर्थः । नन्वाकाशं चेत्सुखेन विशेषयितुमिष्टं अस्त्वन्यतरदेव विशेषणं यद्वाव कं तदेव खमित्यतिरिक्तमितरत् । यदेव खं तदेव कमिति पूर्वविशेषणं वा । ननु सुखाकाशयोरुभयोरपि लौकिकसुखाकाशाभ्यां व्यावृत्तिरिष्टेत्यवोचाम । सुखेनाकाशे विशेषिते व्यावृत्तिरुभयोरर्थप्राप्तैवेति चेत्सत्यमेवं, किंतु सुखेन विशेषितस्यैवाकाशस्य ध्येयत्वं विहितं, न त्वाकाशगुणस्य विशेषणस्य सुखस्य ध्येयत्वं विहितं स्यात् । विशेषणोपादानस्य विशेष्यनियन्तृत्वेनैवोपक्षयात् । अतः खेन सुखमपि विशेष्यते ध्येयत्वाय । कुतश्चैतन्निर्श्चीयते ? कंशब्दस्यापि ब्रह्मशब्दसंबंधात्कं ब्रह्मेति । यदि हि सुखगुणविशिष्टस्य खस्य ध्येयत्वं विवक्षितं स्यात्कं खं ब्रह्मेति ब्रूयुरग्नयः प्रथमम् । न चैवमुक्तवन्तः । किं तर्हि ? कं ब्रह्म खं ब्रह्मेति । अतो ब्रह्मचारिणो मोहापनय-

नाथ कंखंशब्दयोरितरेतरविशेषणविशेष्यत्वनिर्देशो युक्त एव यद्वाव कमित्यादिः तदेतदग्निभिरुक्तं वाक्यार्थमस्मद्बोधाय श्रुतिराह— प्राणं च हास्मै ब्रह्मचारिणे तस्याकाशस्तदाकाशः । प्राणस्य संबंधी आश्रयत्वेन हार्द आकाश इत्यर्थः । सुख गुणवत्त्वनिर्देशात् । तं चाकाशं सुखगुणविशिष्टं ब्रह्म तत्स्थं च प्राणं ब्रह्मसंपर्क देव ब्रह्मेत्युभयं प्राणं चाकाशं च समुच्चित्य ब्रह्मणी ऊचुरग्नय इति ॥ ४.१०.—

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य ए आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥१॥**

संभूयाग्नयो ब्रह्मचारिणे ब्रह्मोक्तवन्तः । अथानंतरं प्रत्येकं स्वस्वविषय विद्यां वक्तुमारेभिरे । तत्रादावेनं ब्रह्मचारिणं गार्हपत्योऽग्निरनुशशास । पृथिव्यग्नि रन्नमादित्य इति ममैताश्चतस्रस्तनवः । तत्र य आदित्ये एष पुरुषो दृश्यते सोऽ हमस्मि गार्हपत्योऽग्निर्यश्च गार्हपत्योऽग्निः स एवाहमादित्ये पुरुषोऽस्मीति पुन परावृत्त्या स एवाहमस्मीति वचनम् । पृथिव्यन्नयोरिव भोज्यत्वलक्षणयोः संबंधे न गार्हपत्यादित्ययोः । अत्तृत्वपक्तृत्वप्रकाशनधर्मा अविशिष्टा इत्यत एकत्व मेवानयोरत्यंतम् । पृथिव्यन्नयोस्तु भोज्यत्वेनाभ्यां संबंधः ॥

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुंजामोऽस्मिंश्च लोके ऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥ इति एकादशः खंडः ॥**

स यः कश्चिदेवं यथोक्तं गार्हपत्यमग्निमन्नाशादत्वेन चतुर्धा प्रविभक्तमु पास्ते सोऽपहते विनाशयति पापकृत्यां पापं कर्म । लोकी लोकवांश्चास्मदीये लोकेनाग्नेयेन तद्वान्भवति यथा वयम् । इह च लोके सर्वं वर्षशतमायुरेति प्राप्नो ज्योगुज्ज्वलं जीवति नाप्रख्यात इत्येतत् । न चास्यावराश्च ते पुरुषाश्चास विदुषः संततिजा इत्यर्थः, न क्षीयन्ते संतत्युच्छेदो न भवतीत्यर्थः । किं च वयमुपभुंजामः पालयामोऽस्मिंश्च लोके जीवन्तममुष्मिंश्च परलोके । य एतमे विद्वानुपास्ते यथोक्तं तस्य तत्फलमित्यर्थः ॥ इति एकादशः खंडः ॥४.११.—

**अथ हैनमन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चंद्रमा इ य एष चंद्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥१॥ स एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जी वति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुंजामोऽस्मिंश्च लोकेऽमुष्मिं**

य एतमेवं विद्वानुपास्ते ॥२॥ इति द्वादशः खंडः ॥

अथ हैनमन्वाहार्यपचनोऽनुशशास दक्षिणाग्निः आपो दिशो नक्षत्राणि चंद्रमा इत्येता मम चतस्रस्तनवश्चतुर्धाहमन्वाहार्यपचनः आत्मानं प्रविभज्याव-स्थितः । तत्र य एष चंद्रमसि पुरुषो दृश्यते सोऽहमस्मि, स एवाहमस्मीति पूर्व-वत् । अन्नसंबंधाज्ज्योतिष्ट्वसामान्याच्चान्वाहार्यपचनचंद्रमसोरेकत्वं दक्षिणदिक्सं-बंधाच्च । अपां नक्षत्राणां च पूर्ववदन्नत्वेनैव संबंधः, नक्षत्राणां चंद्रमसो भोग्य-त्वप्रसिद्धेः । अपामन्नोत्पादकत्वादन्नत्वं दक्षिणाग्नेः, पृथिवीवद्गार्हपत्यस्य । समान-मन्यत् ॥ इति द्वादशः खंडः ॥　　४.१२.—

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥१॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायु-रेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुंजामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥ इति त्रयोदशः खंडः ॥

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति ममाप्येताश्च-तस्रस्तनवः । य एष विद्युति पुरुषो दृश्यते सोऽहमस्मीत्यादि पूर्ववत्सामान्यात् । द्यु-आकाशयोस्त्वाश्रयत्वाद्विद्युदाहवनीययोर्भोग्यत्वेनैव संबंधः । समानमन्यत् ॥—

ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याचार्यस्तमाचार्योऽभ्युवादोपकोसल ३ इति ॥१॥

ते पुनः संभूयोचुर्ह— उपकोसल एषा सोम्य ते तवास्मद्विद्याऽग्निविद्ये-त्यर्थः । आत्मविद्या पूर्वोक्ता प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति च । आचार्यस्तु ते गतिं वक्ता विद्याफलप्राप्तय इत्युक्त्वोपरेमुरग्नयः । आजगाम हास्याचार्यः कालेन । तं च शिष्यमाचार्योऽभ्युवादोपकोसल ३ इति ॥

भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वानुशशासेति को नु मानुशिष्याद्भो इतीहापेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ॥२॥ इदमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥३॥ इति चतुर्दशः खंडः ॥

भगव इति ह प्रतिशुश्राव । ब्रह्मविद इव सोम्य ते मुखं प्रसन्नं
को नु त्वाऽनुशशासेत्युक्तः प्रत्याह— को नु माऽनुशिष्यादनुशासनं कु
भगवंस्त्वयि प्रोषित, इतीहापिव निह्नुतेऽपनिह्नुत इवेति व्यवहितेन संबंधः
चार्पानिह्नुते, न च यथावदग्निभिरुक्तं ब्रवीतीत्यभिप्रायः । कथं? इमेऽग्नयो
परिचरिता उक्तवन्तो नूनं, यतस्त्वां दृष्ट्वा वेपमाना इवेदृशा दृश्यन्ते पूर्वमन्या
सन्त, इतीहाग्नीनभ्यूदेऽभ्युक्तवान्काकाऽग्नीन्दर्शयन् । किं नु सोम्य किल ते
मवोचन्नग्नयः? इति पृष्ट इत्येवमिदमुक्तवन्त इत्येवं ह प्रतिजज्ञे प्रतिज्ञातवा
कमात्रं किंचिन्न सर्वं यथोक्तमग्निभिरुक्तमवोचत् । यत आहाचार्यो— लोका
पृथिव्यादीन्हे सोम्य किल तेऽवोचन्न ब्रह्म साकल्येन । अहं तु ते तुभ्यं
यदिच्छसि त्वं श्रोतुं वक्ष्यामि, शृणु तस्य मयोच्यमानस्य ब्रह्मणो ज्ञानमाह
यथा पुष्करपलाशे पद्मपत्र आपो न श्लिष्यन्त, एवं यथा वक्ष्यामि ब्रह्मैव
पापं कर्म न श्लिष्यते न संबध्यत इति । एवमुक्तवत्याचार्य आहोपकोसलो
मे भगवानिति । तस्मै होवाचाचार्यः ॥ इति चतुर्दशः खंडः ॥ ४.१४

**य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभय
ब्रह्मेति तद्यद्यप्यास्मिन्सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छति ॥१॥**

य एषोऽक्षिणि पुरुषो दृश्यते निवृत्तचक्षुभिर्ब्रह्मचर्यादिसाधनसंपन्नैः
विवेकिभिर्दृष्टेर्द्रष्टा । 'चक्षुषश्चक्षुः' इत्यादिश्रुत्यंतरात् । नन्वग्निभिरुक्तं वितथं
आचार्यस्तु ते गतिं वक्तेति गतिमात्रस्य वक्तेत्यवोचन् भविष्यद्विषयाप
चाग्नीनाम् । नैष दोषः । सुखाकाशस्यैवाक्षिणि दृश्यत इति द्रष्टुरनुवादात्
आत्मा प्राणिनामिति होवाचैवमुक्तवान् एतद्यदेवात्मतत्त्वमवोचाम । एतद
मरणधर्म्यविनाश्यत एवाभयं, यस्य हि विनाशाशंका तस्य भयोपपत्तिस्त
वादभयमत एवैतद्ब्रह्म बृहदनंतमिति । किंचास्य ब्रह्मणोऽक्षिपुरुषस्य मा
तत्तत्र पुरुषस्य स्थानेऽक्षिणि यद्यप्यास्मिन्सर्पिर्वोदकं वा सिंचति वर्त्मन
गच्छति, पक्ष्मावेव गच्छति, न चक्षुषा संबध्यते पद्मपत्रेणेवोदकम् । स्था
प्येतन्माहात्म्यं किं पुनः स्थानिनोऽक्षिपुरुषस्य निरंजनत्वं वक्तव्यमित्यभिप्र

**एतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामान्यभिसंयन्ति
यन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥२॥**

एतं यथोक्तं पुरुषं संयद्वाम इत्याचक्षते । कस्मात्? यस्मादेतं

वामानि वननीयानि संभजनीयानि शोभनान्यभिसंयन्त्यभिसंगच्छन्तीत्यतः संयद्वामः । तथैवंविदमेनं सर्वाणि वामान्यभिसंयन्ति य एवं वेद ॥२॥

**एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥३॥**

एष उ एव वामनीः यस्मादेष हि सर्वाणि वामानि पुण्यकर्मफलानि पुण्यानुरूपं प्राणिभ्यो नयति प्रापयति वहति चात्मधर्मत्वेन । विदुषः फलं—सर्वाणि वामानि नयति य एवं वेद ॥

**एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥४॥**

एष उ एव भामनीः एष हि यस्मात्सर्वेषु लोकेष्वादित्यचंद्राग्न्यादिरूपैर्भाति दीप्यते 'तस्य भासा सर्वमिदं विभाति' इति श्रुतेः । अतो भामानि नयतीति भामनीः । य एवं वेदासावपि सर्वेषु लोकेषु भाति ॥

**अथ यदु चैवास्मिन्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चंद्रमसं चंद्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥५॥ इति पंचदशः खंडः ॥**

अथेदानीं यथोक्तब्रह्मविदो गतिरुच्यते । यद्यदि उ चैवास्मिन्नेवंविदि शव्यं शवकर्म मृते कुर्वन्ति, यदि च न कुर्वन्ति ऋत्विजः, सर्वथाप्येवंवित्तेन शवकर्मणाऽकृतेनापि प्रतिबद्धो न ब्रह्म न प्राप्नोति, न च कृतेन शवकर्मणास्य कश्चनाभ्यधिको लोकः । 'न कर्मणा वर्धते नो कनीयान्' इति श्रुत्यंतरात् । शवकर्मण्यनादरं दर्शयन्विद्यां स्तौति, न पुनः शवकर्मैवंविदो न कर्तव्यमिति । अक्रियमाणे हि शवकर्मणि कर्मणां फलारंभे प्रतिबंधः कश्चिदनुमीयतेऽन्यत्र । यत इह विद्याफलारंभकाले शवकर्म स्याद्वा न वेति विद्यावतोऽप्रतिबंधेन फलारंभं दर्शयति । ये सुखाकाशमक्षिस्थं संयद्वामो वामनीर्भामनीरित्येवंगुणमुपासते प्राणसहितामग्निविद्यां च तेषामन्यत्कर्म भवतु मा वा भूत्सर्वथापि तेऽर्चिषमेवाभिसंभवन्त्यर्चिरभिमानिनीं देवतामभिसंभवन्ति प्रतिपद्यन्त इत्यर्थः । अर्चिषोऽर्चिर्देवताया अहरहरभिमानिनीं देवतां, अह्न आपूर्यमाणपक्षं शुक्लपक्षदेवतां, आपूर्य-

माणपक्षाद्यान्षण्मासानुदङ्ङुत्तरां दिशमेति सविता तान्मासानुत्त
तेभ्यो मासेभ्यः संवत्सरं संवत्सरदेवतां, ततः संवत्सरादादित्यं,
मसं चंद्रमसो विद्युतम् । तत्तत्रस्थांस्तान्पुरुषः कश्चिद्ब्रह्मलोकादेत्यामान
सृष्टौ भवो मानवो न मानवोऽमानवः, स पुरुष एनान्ब्रह्म सत्यलोक
गन्तृगन्तव्यगमयितृत्वव्यपदेशेभ्यः सन्मात्रब्रह्मप्राप्तौ तदनुपपत्तेः ।
ब्रह्माप्येति' इति हि तत्र वक्तुं न्याय्यम् । सर्वभेदनिरासेन सन्
वक्ष्यति । न चादृष्टो मार्गोऽगमनायोपतिष्ठते 'स एनमविदितो न
श्रुत्यंतरात् । एष देवपथो देवैरर्चिरादिभिर्गमयितृत्वेनाधिकृतैरुपल
देवपथ उच्यते । ब्रह्म गंतव्यं तेन चोपलक्षित इति ब्रह्मपथः । एतैः
माना गच्छन्तो ब्रह्मेमं मानवं मनुसंबंधिनं मनोः सृष्टिलक्षणमाव
आवर्तन्तेऽस्मिञ्जननमरणप्रबंधचक्रारूढा घटीयंत्रवत्पुनः पुनरित्यावर्त
पद्यन्ते । नावर्तन्त इति द्विरुक्तिः सफलाया विद्यायाः परिसमाप्तिप्रद

रहस्यप्रकरणे प्रसंगादारण्यकत्वसामान्याच्च यज्ञे क्षत उत्पन्ने
प्रायश्चित्तार्था विधातव्यास्तदभिज्ञस्य चर्त्विजो ब्रह्मणो मौनमित्यत इ

**एष ह वै यज्ञो योऽयं पवत एष ह यन्निदं सर्वं पुनाति य सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी ॥१॥**

एष ह वै एष वायुर्योऽयं पवतेऽयं यज्ञः । ह वै इति प्रसि
तकौ निपातौ । वायुप्रतिष्ठो हि यज्ञः प्रसिद्धः श्रुतिषु । "स्वाहा वातेध
वै यज्ञो योऽयं पवते" इत्यादिश्रुतिभ्यः । वात एव हि चलनात्मक
समवायी । "वात एव यज्ञस्यारंभको वातः प्रतिष्ठा" इति च श्रवणा
यन्गच्छंश्चलन्निदं सर्वं जगत्पुनाति पावयति शोधयति । न ह्यचलत
दोषनिरसनं चलतो हि दृष्टं न स्थिरस्य । यद्यस्माच्च यन्नेष इदं सर्वं पु
देष एव यज्ञो यत्पुनातीति । तस्यास्यैवंविशिष्टस्य यज्ञस्य वाक्च
व्यापृता । मनश्च यथाभूतार्थज्ञाने व्यापृतम् । ते एते वाङ्मनसे
याभ्यां यज्ञस्तायमानः प्रवर्तते ते वर्तनी । "प्राणापानपरिचलनवत्या
श्चित्तस्य चोत्तरोत्तरक्रमो यद्यज्ञः" इति हि श्रुत्यंतरम् । अतो वाङ्मन
वर्तत इति वाङ्मनसे वर्तनी उच्येते यज्ञस्य ॥

**तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताध्वर्युरुद्गा**

स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति ॥२॥ अन्यतरामेव वर्तनीं संस्करोति हीयतेऽन्यतरा स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान्भवति ॥३॥

तयोर्वर्तन्योरन्यतरां वर्तनीं मनसा विवेकज्ञानवता संस्करोति ब्रह्मर्त्विक्, वाचा वर्तन्या होताध्वर्युरुद्गाता, इत्येते त्रयोऽप्यृत्विजोऽन्यतरां वाग्लक्षणां वर्तनीं वाचैव संस्कुर्वन्ति । तत्रैवं सति वाङ्मनसे वर्तनी संस्कार्ये यज्ञे । अथ स ब्रह्मा यत्र यस्मिन्काल उपाकृते प्रारब्धे प्रातरनुवाके शस्त्रे पुरा पूर्वं परिधानीयाया ऋचो ब्रह्मैतस्मिन्नंतरे काले व्यववदति मौनं परित्यजति यदि, तदान्यतरामेव वाग्वर्तनीं संस्करोति । ब्रह्मणा असंस्क्रियमाणा मनोवर्तनी हीयते विनश्यति छिद्रीभवत्यन्यतरा । स यज्ञो वाग्वर्तन्यैवान्यतरया वर्तितुमशक्नुवन्रिष्यति । कथमिवेत्याह—स यथैकपात्पुरुषो व्रजन्गच्छन्नध्वानं रिष्यति, रथो वैकेन चक्रेण वर्तमानो गच्छन्रिष्यत्येवमस्य यजमानस्य कुब्रह्मणा यज्ञो रिष्यति विनश्यति । यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति । यज्ञप्राणो हि यजमानः । अतो युक्तो यज्ञरेषे रेषस्तस्य । स तं यज्ञमिष्ट्वा तादृशं पापीयान्पापतरो भवति ॥

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरा ॥४॥ स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान्भवति ॥५॥ इति षोडशः खंडः ॥

अथ पुनर्यत्र ब्रह्मा विद्वान्मौनं परिगृह्य वाग्विसर्गमकुर्वन्वर्तते यावत्परिधानीयाया न व्यववदति, तथैव सर्वर्त्विजः उभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरापि । किमिवेत्याह पूर्वोक्तविपरीतौ दृष्टान्तौ । एवमस्य यजमानस्य यज्ञः स्ववर्तनीभ्यां वर्तमानः प्रतितिष्ठति स्वेनात्मनाऽविनश्यन्वर्तत इत्यर्थः । यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति । स यजमान एवं मौनविज्ञानवद्ब्रह्मोपेतं यज्ञमिष्ट्वा श्रेयान्भवति श्रेष्ठो भवतीत्यर्थः॥ इति षोडशः खंडः ॥ ४.१६.—

अत्र ब्रह्मणो मौनं विहितं, तद्रेषे ब्रह्मत्वकर्मणि चाथान्यस्मिंश्च होत्रादिकर्मरेषे व्याहृतिहोमः प्रायश्चित्तमिति तदर्थं व्याहृतयो विधातव्या इत्याह—

**प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानां रसान्प्रावृहदग्निं पृ वायुमंतरिक्षादादित्यं दिवः ॥१॥**

प्रजापतिर्लोकानभ्यतपल्लोकानुद्दिश्य तत्र सारजिघृक्षया ध्यानलक्षणं चार। तेषां तप्यमानानां लोकानां रसान्साररूपान्प्रांवृहदुद्धृतवान् जग्राहेल्कान्। अग्निं रसं पृथिव्याः वायुमंतरिक्षात् आदित्यं दिवः ॥

**स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानां रसान्प्रावृ ऋचो वायोर्यजूंषि सामान्यादित्यात् ॥२॥**

पुनरप्येवमेवमग्न्याद्याः स एतास्तिस्रो देवता उद्दिश्याभ्यतपत्। त सारं रसं त्रयीविद्यां जग्राह ॥

**स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसान्प्रावृहद्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः ॥३॥ तद्यदृक्तो रिष्येद्भूः स्व गार्हपत्ये जुहुयादृचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टं संदधाति**

स एतां पुनरभ्यतपत् त्रयीं विद्याम्। तस्यास्तप्यमानाया रसं व्याहृतिमृग्भ्यो जग्राह। भुवरिति व्याहृतिं यजुर्भ्यः। स्वरिति व्याहृतिं साम अत एव लोकदेववेदरसा महाव्याहृतयः। अतस्तत्र यज्ञे यद्यृक्त ऋक्त दृङ्निमित्तं रिष्येद्यज्ञः क्षतं प्राप्नुयात् भूः स्वाहेति गार्हपत्ये जुहुयात्। र प्रायश्चित्तिः। कथम्, ऋचामेव, तदिति क्रियाविशेषणं, रसेनर्चां वीर्येण यज्ञस्य ऋक्संबंधिनो यज्ञस्य विरिष्टं विच्छिन्नं क्षतरूपमुत्पन्नं सं प्रतिसंधत्ते ॥

**अथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यज्ञ तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टं संदधाति ॥५॥ अथ सामतो रिष्येत्स्वः स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन वीर्येण साम्नां यज्ञस्य विरिष्टं संदधाति ॥६॥**

अथ यदि यजुष्टो यजुर्निमित्तं रिष्येत् भुवः स्वाहेति दक्षिणाग्नौ यात्। तथा सामनिमित्ते रेषे स्वः स्वाहेत्याहवनीये जुहुयात्। तथा पृ संदधाति। ब्रह्मनिमित्ते तु रेषे त्रिष्वग्निषु तिसृभिर्व्याहृतिभिर्जुहुयात्। त्र विद्यायाः स रेषः। "अथ केन ब्रह्मत्वमित्यनयैव त्रय्या विद्यया" इति न्यायान्तरं वा मृग्यं ब्रह्मत्वनिमित्ते रेषे ॥

तद्यथा लवणेन सुवर्णं संदध्यात्सुवर्णेन रजतं रजतेन त्रपु त्रपुणा सीसेन लोहं लोहेन दारु दारु चर्मणा ॥७॥ एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टं संदधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ॥८॥

तद्यथा लवणेन सुवर्णं संदध्यात् । क्षारेण टंकणादिना खरे मृदुत्वकरं हि तत् । सुवर्णेन रजतमशक्यसंधानं संदध्यात् । रजतेन तथा त्रपु, त्रपुणा सीसं, सीसेन लोहं, लोहेन दारु, दारु चर्मणा चर्मबंधनेन । एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण रसाख्येनौजसा यज्ञस्य विरिष्टं संदधाति । भेषजकृतो ह वा एष यज्ञः । रोगार्त इव पुमांश्चिकित्सकेन सुशिक्षितेनैष यज्ञो भवति । कोऽसौ । यत्र यस्मिन्यज्ञे एवंविद्यथोक्तव्याहृतिहोमप्रायश्चित्तविद्ब्रह्मा भवति स यज्ञ इत्यर्थः ॥

एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविदं ह वा एषा ब्रह्माणमनुगाथा यतो यत आवर्तते तत्तद्गच्छति ॥९॥

किंचैष ह वा उदक्प्रवण उदङ्निम्नो दक्षिणोच्छ्रायो यज्ञो भवति । उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थः । यत्रैवंविद्ब्रह्मा भवत्येवंविदं ह वै ब्रह्माणमृत्विजं प्रत्येषाऽनुगाथा ब्रह्मणः स्तुतिपरा । यतो यत आवर्तते कर्म प्रदेशादृत्विजां यज्ञः क्षतीभवंस्तत्तद्यज्ञस्य क्षतरूपं प्रतिसंदधत्प्रायश्चित्तेन गच्छति परिपालयति इत्येतत् ॥

मानवो ब्रह्मैवैक ऋत्विक्कुरूनश्वाभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥१०॥ इति सप्तदशः खंडः ॥ इति चतुर्थोऽध्यायः ॥

मानवो ब्रह्मा मौनाचरणान्मननाद्वा ज्ञानवत्त्वात्ततो ब्रह्मैवैकर्त्विक् कुरून् कर्तॄन् । योद्धृनारूढानश्वा वडवा यथाभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति तत्कृतदोषापनयनात् । यत एवं विशिष्टो ब्रह्मा विद्वांस्तस्मादेवंविदमेव यथोक्तव्याहृत्यादिविदं ब्रह्माणं कुर्वीत नानेवंविदं कदाचनेति । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥ ४.१७.—

॥ इति चतुर्थोऽध्यायः ॥

## ॥ पंचमोऽध्यायः ॥

सगुणब्रह्मविद्याया उत्तरा गतिरुक्ता । अथेदानीं पंचमेऽध्याये पंचाग्नि गृहस्थस्योर्ध्वरेतसां च श्रद्धालूनां विद्यान्तरशीलिनां तामेव गतिमनूद्य, अ दक्षिणा दिक्संबंधिनी केवलकर्मिणां धूमादिलक्षणा, पुनरावृत्तिरूपा तृतीया ततः कष्टतरा संसारगतिर्वैराग्यहेतोर्वक्तव्येत्यारभ्यते । प्राणः श्रेष्ठो वागादि प्राणो वाव संवर्ग इत्यादि च बहुशोऽतीते ग्रंथे प्राणग्रहणं कृतं, स कथं, वागादिषु सर्वैः संहत्यकारित्वाविशेषे कथं च तस्योपासनमिति तस्य श्रेष्ठत्व गुणविधित्सयेदमनंतरमारभ्यते—

**ॐ । यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्र वाव ज्येष्ठश्च श्रेष्ठश्च ॥१॥**

यो ह वै कश्चिज्ज्येष्ठं च प्रथमं वयसा श्रेष्ठं च गुणैरभ्यधिकं वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति । फलेन पुरुषं प्रलोभ्याभिमुखीकृत्याह—प्राणो ज्येष्ठश्च वयसा वागादिभ्यः । गर्भस्थे हि पुरुषे प्राणस्य वृत्तिर्वागादिभ्यः लब्धात्मिका भवति यथा गर्भो विवर्धते । चक्षुरादिस्थानावयवनिष्पत्तौ स पश्चाद्वागादीनां वृत्तिलाभ इति प्राणो ज्येष्ठो वयसा भवति । श्रेष्ठत्वं तु प्रति यिष्यति 'सुहय' इत्यादिनिदर्शनेन । अतः प्राण एव ज्येष्ठश्च श्रेष्ठश्चास्मिन्क करणसंघाते ॥

**यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः।**

यो ह वै वसिष्ठं वसितृतममाच्छादयितृतमं वसुमत्तमं वा यो वेद तथैव वसिष्ठो ह भवति स्वानां ज्ञातीनाम् । कस्तर्हि वसिष्ठ इत्याह—वा वसिष्ठो, वाग्मिनो हि पुरुषा वसन्त्यभिभवन्त्यन्यान् वसुमत्तमाश्च, वाग्वसिष्ठः ॥

**यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यास्मिंश्च लोकेऽमुष्मिंश्च चक्षु प्रतिष्ठा ॥२॥**

यो ह वै प्रतिष्ठां वेद स अस्मिंल्लोकेऽमुष्मिंश्च परे प्रतितिष्ठति ह । तर्हि प्रतिष्ठेत्याह—चक्षुर्वाव प्रतिष्ठा । चक्षुषा हि पश्यन्समे च दुर्गे च तिष्ठति यस्मादतः प्रतिष्ठा चक्षुः ॥

**यो ह वै संपदं वेद सं हास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च**

**व संपत् ॥४॥**

यो ह वै संपदं वेद तस्मा अस्मै दैवाश्च मानुषाश्च कामाः संपद्यन्ते ह । तर्हि संपदित्याह— श्रोत्रं वाव संपत् । यस्माच्छ्रोत्रेण वेदा गृह्यन्ते तदर्थज्ञानं च, ततः कर्माणि क्रियन्ते, ततः कामसंपत् इत्येवं कामसंपद्धेतुत्वाछ्रोत्रं वाव संपत् ॥

**यो ह वा आयतनं वेदायतनं ह स्वानां भवति मनो ह वा आयतनम् ॥५॥**

यो ह वा आयतनं वेद आयतनं ह स्वानां भवत्याश्रयो भवतीत्यर्थः । किं तदायतनमित्याह— मनो ह वा आयतनम् । इंद्रियोपहृतानां विषयाणां भोक्त्रर्थानां प्रत्ययरूपाणां मन आयतनमाश्रयः । अतो मनो ह वा आयतनमित्युक्तम् ॥

**अथ ह प्राणा अहंश्रेयसि व्यूदिरेऽहं श्रेयानस्म्यहं श्रेयानस्मीति ॥६॥**

अथ ह प्राणा एवं यथोक्तगुणाः सन्तोऽहंश्रेयसि अहं श्रेयानस्म्यहं श्रेयानस्मीत्येतस्मिन्प्रयोजने व्यूदिरे नाना विरुद्धं चोदिर उक्तवन्तः ॥

**ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन्को नः श्रेष्ठ इति तान्होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥७॥**

ते ह ते हैवं विवदमाना आत्मनः श्रेष्ठत्वविज्ञानाय प्रजापतिं पितरं जनयितारं कंचिदेत्योचुरुक्तवन्तो हे भगवन्को नोऽस्माकं मध्ये श्रेष्ठोऽभ्यधिको गुणैः ? इत्येवं पृष्टवतः तान्पितोवाच ह— यस्मिन्वो युष्माकं मध्य उत्क्रान्ते शरीरमिदं पापिष्ठमिवातिशयेन जीवतोऽपि समुत्क्रान्तप्राणं ततोऽपि पापिष्ठतरमिवातिशयेन दृश्येत कुणपमस्पृश्यमशुचि दृश्येत स वो युष्माकं श्रेष्ठ इत्यवोचत्काक्वा तद्दुःखं परिजिहीर्षुः ॥

**स ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् ॥८॥ चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथांधा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥९॥ श्रोत्रं होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्यो-**

**वाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्त णेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह त्रम् ॥१०॥ मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमश मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा न्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥११॥**

तथोक्तेषु पित्रा प्राणेषु सा ह वागुच्चक्रामोत्क्रान्तवती । सा चोत्क्रम्य त्सरमात्रं प्रोष्य स्वव्यापारान्निवृत्ता सती पुनः पर्येत्येतरान्प्राणानुवाच— केन प्रकारेणाशकत शक्तवन्तो यूयं मदृते मां विना जीवितुं धारयितुमा मिति । ते होचुर्यथा कला इत्यादि । कला मूका यथा लोकेऽवदन्तो जीवन्ति । कथम् । प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्य मनसैवं सर्वकरणचेष्टां कुर्वन्त इत्यर्थः । एवं वयमजीविष्मेत्यर्थः । आत श्रेष्ठतां प्राणेषु बुद्ध्वा प्रविवेश ह वाक्पुनः स्वव्यापारे प्रवृत्ता बभूवेत्यर्थः । स मन्यच्चक्षुर्होच्चक्राम श्रोत्रं होच्चक्राम मनो होच्चक्रामेत्यादि । यथा बाला अमन प्ररूढमनस इत्यर्थः ॥

**अथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्वीशशंकून्संखिदेदे तरान्प्राणान्समखिदत्तं हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मीरिति ॥१२॥**

एवं परीक्षितेषु वागादिष्वथानंतरं ह स मुख्यः प्राण उच्चिक्रमिषन्नु तुमिच्छन्किमकरोदित्युच्यते । यथा लोके सुहयः शोभनोऽश्वः पड्वीशशंकू बंधनकीलान्परीक्षणायारूढेन कशया हतः सन्संखिदेत्समुत्खनेत्समुत्पाटयेत् इतरान्वागादीन्प्राणान्समखिदत्समुद्धृतवान् । ते प्राणाः संचालिताः सन्तः स्थातुमनुत्सहमाना अभिसमेत्य मुख्यं प्राणं तमूचुर्हे भगवन्नेधि भव नः यस्मात्त्वं नोऽस्माकं श्रेष्ठोऽसि मा चास्माद्देहादुत्क्रमीरिति ॥

**अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति ॥१३॥ अथ हैनं श्रो वाच यदहं संपदस्मि त्वं तत्संपदसीत्यथ हैनं मन उवाच यदहमा मस्मि त्वं तदायतनमसीति ॥१४॥**

अथ हैनं वागादयः प्राणस्य श्रेष्ठत्वं कार्येण आपादयन्त आहुर्बा

न्तो राज्ञे विदाः । कथं, वाक् तावदुवाच— यदहं वसिष्ठोऽस्मि, यदिति ़्यांविशेषणं, यद्वसिष्ठत्वगुणास्मीत्यर्थः । त्वं तद्वसिष्ठस्तेन वसिष्ठत्वगुणेन त्वं द्वसिष्ठोऽसि तद्गुणस्त्वमित्यर्थः । अथवा तच्छब्दोऽपि क्रियाविशेषणमेव । त्वत्कृ- स्त्वदीयोऽसौ वसिष्ठत्वगुणोऽज्ञानान्ममेति मयाभिमत इत्येतत् । तथोत्तरेषु ज्यं चक्षुःश्रोत्रमनःसु ॥

**न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्ये- ाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥१५॥ इति प्रथमः खंडः ॥**

श्रुतेरिदं वचो युक्तमिदं वागादिभिर्मुख्यं प्राणं प्रत्यभिहितं यस्मान्न वै कि वाचो न चक्षूंषि न श्रोत्राणि न मनांसीति वागादीनि करणान्याचक्षते ाकिका आगमज्ञा वा, किं तर्हि प्राणा इत्येवाचक्षते कथयन्ति, यस्मात्प्राणे वैतानि सर्वाणि वागादीनि करणजातानि भवन्ति । अतो मुख्यं प्राणं प्रत्यनुरूप- व वागादिभिरुक्तमिति प्रकरणार्थमुपसंजिहीर्षति ॥

ननु कथमिदं युक्तं चेतनावन्त इव पुरुषा अहंश्रेष्ठतायै विवदन्तोऽन्योन्यं पर्धेरन्निति । न हि चक्षुरादीनां वाचं प्रत्याख्याय प्रत्येकं वदनं संभवति । तथा- गमो देहात्पुनः प्रवेशो ब्रह्मगमनं प्राणस्तुतिर्वोपपद्यते । तत्राग्न्यादिचेतनावद्देव- ाधिष्ठितत्वाद्वागादीनां चेतनावत्त्वं तावत्सिद्धमागमतः । तार्किकसमयविरोध इति द्देह एकस्मिन्ननेकचेतनावत्त्वे । न । ईश्वरस्य निमित्तकारणत्वाभ्युपगमात् । तावदीश्वरमभ्युपगच्छन्ति तार्किकाः, ते मनआदिकार्यकरणानामाध्यात्मिकानां ाह्यानां च पृथिव्यादीनामीश्वराधिष्ठितानामेव नियमेन प्रवृत्तिमिच्छन्ति रथादिवत् । चास्माभिरग्न्याद्याश्चेतनावत्योऽपि देवता अध्यात्मं भोक्त्र्योऽभ्युपगम्यन्ते, किं र्हि, कार्यकरणवतीनां हि तासां प्राणैकदेवताभेदानां अध्यात्माधिभूताधिदैवभे- दकोटिविकल्पानां अध्यक्षतामात्रेण नियन्तेश्वरोऽभ्युपगम्यते । स ह्यकरणः 'अपा- णिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यादिमंत्रवर्णात् । 'हिर- ण्यगर्भं पश्यत जायमानम्' 'हिरण्यगर्भं जनयामास पूर्वम्' इत्यादि च श्वेताश्व- तरीयाः पठन्ति । भोक्ता कर्मफलसंबंधी देहे तद्विलक्षणो जीव इति वक्ष्यामः । वागादीनां चेह संवादः कल्पितो विदुषोऽन्वयव्यतिरेकाभ्यां प्राणश्रेष्ठतानिर्धार- णार्थम् । यथा लोके पुरुषा अन्योन्यमात्मनः श्रेष्ठतायै विवदमानाः कंचिद्गुण- विशेषाभिज्ञं पृच्छन्ति को नः श्रेष्ठो गुणैरिति, तेनोक्ता एकैकश्येन अदः कार्यं

साधयितुमुपगच्छत, येनादः कार्यं साध्यते, स वः श्रेष्ठ, इत्युक्तास्तथैवोपगच्छ आत्मनोऽन्यस्य वा श्रेष्ठतां निर्धारयन्ति, तथेमं संव्यवहारं वागादिषु कल्पि वती श्रुतिः— कथं नाम विद्वान्वागादीनामेकैकस्याभावेऽपि जीवनं दृष्टं न प्राणस्येति प्राणश्रेष्ठतां प्रतिपद्येतेति। तथाच श्रुतिः कौषीतकिनां— "जीव वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतोऽन्धान्हि पश्यामो जीवति श्रो पेतो बधिरान्हि पश्यामो जीवति मनोऽपेतो बालान्हि पश्यामो जीवति ब च्छिन्नो जीवत्यूरुच्छिन्नः" इत्याद्या ॥ इति प्रथमः खंडः ॥ ५.१.

**स होवाच किं मेऽन्नं भविष्यतीति यत्किंचिदिदमा श्वभ्य आ श निभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा विदि किंचनानन्नं भवतीति ॥१॥**

स होवाच मुख्यः प्राणः किं मेऽन्नं भविष्यतीति। मुख्यं प्राणं प्रष्टा कल्पयित्वा वागादीन्प्रतिवक्तॄनिव कल्पयन्ती श्रुतिराह— यदिदं लोकेऽन्न प्रसिद्धमा श्वभ्यः श्वभिः सह आ शकुनिभ्यः सह शकुनिभिः सर्वप्राणिनां तत्तवान्नमिति होचुर्वागादय इति। प्राणस्य सर्वमन्नं प्राणोऽत्ता सर्वस्यान्नस्य प्रतिपत्तये कल्पिताख्यायिकारूपाद्व्यावृत्य स्वेन श्रुतिरूपेणाह— तद्वै एतद्य चिल्लोके प्राणिभिरन्नमद्यते अनस्य प्राणस्य तदन्नं प्राणेनैव तदद्यत इत्य सर्वप्रकारचेष्टाव्याप्तिगुणप्रदर्शनार्थमन इति प्राणस्य प्रत्यक्षं नाम। प्राद्युप वत्वे हि विशेषगतिरेव स्यात्। तथाच सर्वान्नानामत्तुर्नामग्रहणमितीदं प्रा नाम अन इति सर्वान्नानामत्तुः साक्षादभिधानम्। न ह वा एवंविदि यथो प्राणविदि प्राणोऽहमस्मि सर्वभूतस्थः सर्वान्नानामत्तेति तस्मिन्नेवंविदि ह किंचन किंचिदपि प्राणिभिरद्यं सर्वैरनन्नमनद्यं न भवति, सर्वमेवंविदन्नं भव त्यर्थः। प्राणभूतत्वाद्विदुषः। 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' इत्यु क्रम्य "एवंविदो ह वा उदेति सूर्य एवंविद्यस्तमेति" इति श्रुत्यंतरात् ॥

**स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतद शिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लंभुको ह वासो भवत्य ह भवति ॥२॥**

स होवाच पुनः प्राणः। पूर्ववदेव कल्पना। किं मे वासो भविष्यती इति होचुर्वागादयः। यस्मात्प्राणस्य वास आपस्तस्माद्वा एतदशिष्यन्तो

॥ भुक्तवन्तश्च ब्राह्मणा विद्वांस एतत्कुर्वन्ति । किम् । अद्भिर्वासस्थानीयाभिः ताद्भोजनात्पूर्वमुपरिष्टाच्च भोजनादूर्ध्वं च परिदधति परिधानं कुर्वन्ति मुख्यस्य स्य । लंभुको लंभनशीलो वासो ह भवति । वाससो लब्धैव भवतीत्यर्थः । ग्नो ह भवति । वाससो लंभुकत्वेनार्थसिद्धैवानग्नतेत्यनग्नो ह भवतीत्युत्तरा- न्भवतीत्येतत् ॥

भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं शुद्ध्यर्थं विज्ञातं तस्मिन्प्राणस्य वास दर्शनमात्रमिह विधीयते, अद्भिः परिदधतीति । नाचमनान्तरम् । यथा केः प्राणिभिरद्यमानमन्नं प्राणस्येति दर्शनमात्रं, तद्वत् । किं मेऽन्नं किं मे वास ादिप्रश्नप्रतिवचनयोस्तुल्यत्वात् । यद्याचमनमपूर्वं तादर्थ्येन क्रियेत तदा याद्यन्नमपि प्राणस्य भक्ष्यत्वेन विहितं स्यात् । तुल्ययोर्विज्ञानार्थयोः प्रश्नप्रति- नयोः प्रकरणस्य विज्ञानार्थत्वादर्धजरतीयो न्यायो न युक्तः कल्पयितुम् ॥

यत्तु प्रसिद्धमाचमनं प्रायत्यार्थं प्राणस्यानग्नतार्थं च न भवतीत्युच्यते, तथा वयमाचमनमुभयार्थं ब्रूमः । किं तर्हि, प्रायत्यार्थाचमनसाधनभूता आपः । गस्य वास इति दर्शनं चोद्यत इति ब्रूमः । तत्राचमनस्योभयार्थत्वप्रसंगदोष- दना अनुपपन्ना । वासोर्थ एवाचमने तद्दर्शनं स्यादिति चेत् । न । वासोः नार्थवाक्ये वासोर्थापूर्वाचमनविधाने तत्रानग्नतार्थत्वदृष्टिविधाने च वाक्यभेदः । चमनस्य तदर्थत्वमन्यार्थत्वं चेति प्रमाणाभावात् ॥

**तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्ये- च्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥३॥**

तदेतत्प्राणदर्शनं स्तूयते । कथम् । तद्धैतत्प्राणदर्शनं सत्यकामो जाबालो श्रुतये नाम्ना वैयाघ्रपद्याय व्याघ्रपदोऽपत्यं वैयाघ्रपद्यस्तस्मै गोश्रुत्याख्यायो- क्त्वोवाच अन्यदपि वक्ष्यमाणं वचः । किं तदुवाचेत्याह—यद्यपि शुष्काय ाणवे एतद्दर्शनं ब्रूयात्प्राणवित् जायेरन्नुत्पद्येरन्नेवास्मिन्स्थाणौ शाखाः प्ररोहेयुश्च लाशानि पत्राणि, किमु जीवते पुरुषाय ब्रूयादिति ॥

यथोक्तप्राणदर्शनविद इदं मंथाख्यं कर्मारभ्यते—

**अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ वौषधस्य मंथं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य त्वा मंथे संपातमवनयेत् ॥४॥**

अथानंतरं यदि महन्महत्त्वं जिगमिषेद्गंतुमिच्छेन्महत्त्वं प्राप्तुं यदि काम तेत्यर्थः । तस्येदं कर्म विधीयते । महत्त्वे हि सति श्रीरुपनमते । श्रीमतो ह्य प्राप्तं धनं, ततः कर्मानुष्ठानं, ततश्च देवयानं पितृयाणं वा पंथानं प्रतिपत्स्य इत्येतत्प्रयोजनमुररीकृत्य महत्त्वप्रेप्सोरिदं कर्म, न विषयोपभोगकामस्य । तस्य कालादिविधिरुच्यते—अमावास्यायां दीक्षित्वा दीक्षित इव भूमिशयनादिनिय कृत्वा तपोरूपं सत्यवचनं ब्रह्मचर्यमित्यादिधर्मवान्भूत्वेत्यर्थः । न पुनर्दीक्षो कर्मजातं सर्वमुपादत्ते, अतद्विकारत्वान्मंथाख्यस्य कर्मणः । 'उपसद्व्रती' इ श्रुत्यंतरात्पयोमात्रभक्षणं च शुद्धिकारणं तप उपादत्ते । पौर्णमास्यां रात्रौ कर्मारभ सर्वौषधस्य ग्राम्यारण्यानामोषधीनां यावच्छक्यत्यल्पमल्पमुपादाय तद्वितुषीकृ आममेव पिष्टं दधिमधुनोरौदुंबरे कंसाकारे चमसाकारे वा पात्रे श्रुत्यंतरात्प्रक्षिप्य पमथ्याग्रतः स्थापयित्वा ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावावसथ्य आजस्यावापस्थ हुत्वा स्रुवसंलग्नं मंथे संपातमवनयेत्संस्रवमधः पातयेत् ॥

**वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मंथे संपातमवनयेत्प्रतिष्ठ स्वाहेत्यग्नावाज्यस्य हुत्वा मंथे संपातमवनयेत्संपदे स्वाहेत्यग्नावाज्य हुत्वा मंथे संपातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मंथे संपा मवनयेत् ॥५॥**

समानमन्यत् । वसिष्ठाय प्रतिष्ठायै संपदे आयतनाय स्वाहेति प्रत्ये तथैव संपातमवनयेत् हुत्वा ॥

**अथ प्रतिसृप्यांजलौ मंथमाधाय जपत्यमो नामास्यमा हि ते स मिदं स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्यं श्रैष्ठ्यं राज्यमाधिप गमयत्वहमेवेदं सर्वमसानीति ॥६॥**

अथ प्रतिसृप्याग्नेरीषदपसृत्य अंजलौ मंथमाधाय जपतीमं मंत्रम्—अ नामास्यमा हि ते । अम इति प्राणस्य नाम । अन्नेन हि प्राणः प्राणिति इत्यतो मंथद्रव्यं प्राणस्यान्नत्वात्प्राणत्वेन स्तूयतोऽमो नामासीति । कुतः । य अमा सह हि यस्मात्ते तव प्राणभूतस्य सर्वं समस्तं जगदिदमतः । स हि प्रा भूतो मंथो ज्येष्ठः श्रेष्ठश्च । अत एव च राजा दीप्तिमानधिपतिश्चाधिष्ठाय पा यिता सर्वस्य । स मा मामपि मंथः प्राणो ज्यैष्ठ्यादिगुणपूगमात्मनो गमः अहमेवेदं सर्वं जगदसानि भवानि प्राणवत् । इतिशब्दो मंत्रपरिसमाप्त्यर्थः ॥

**अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति यं देवस्य भोजनमित्याचामति श्रेष्ठं सर्वधातममित्याचामति तुरं भगस्य ोमहीति सर्वं पिबति निर्णिज्य कंसं चमसं वा पश्चादग्नेः संविशति र्मणि वा स्थंडिले वा वाचंयमोऽप्रसाह स यदि स्त्रियं पश्येत्समृद्धं र्मेति विद्यात् ॥७॥**

अथानंतरं खल्वेतया वक्ष्यमाणयर्चा पच्छः पादश आचामति भक्षयति, ित्रस्यैकैकेन पादेनैकैकं ग्रासं भक्षयति । तद्भोजनं सवितुः सर्वस्य प्रसवितुः । ाणमादित्यं चैकीकृत्योच्यते । आदित्यस्य वृणीमहे प्रार्थयेमहि मंथरूपम् । नान्नेन सावित्रेण भोजनेनोपभुक्तेन वयं सवितृस्वरूपापन्ना भवेमेत्यभिप्रायः । वस्य सवितुरिति पूर्वेण संबंधः । श्रेष्ठं प्रशस्यतमं सर्वान्नेभ्यः सर्वधातमं सर्व- य जगतो धारयितृतममतिशयेन विधातृतममिति वा । सर्वथा भोजनविशेष- ाम् । तुरं त्वरं तूर्णं शीघ्रमित्येतत् । भगस्य देवस्य सवितुः स्वरूपमिति शेषः । ीमहि चिंतयेमहि विशिष्टभोजनेन संस्कृताः शुद्धात्मानः सन्तः इत्यभिप्रायः । अथवा भगस्य श्रियः कारणं महत्त्वं प्राप्तुं कर्म कृतवन्तो वयं तद्धीमहि चिंत- ामर्हाति सर्वं च मंथलेपं पिबति । निर्णिज्य प्रक्षाल्य कंसं कंसाकारं चमसं चमसाकारं वौदुंबरं पात्रम् । पीत्वाचम्य पश्चादग्नेः प्राक्शिराः संविशति चर्मणि ाऽजिने स्थंडिले केवलायां वा भूमौ । वाचंयमो वाग्यतः सन्नित्यर्थः । अप्र- ाहो न प्रसह्यते नाभिभूयते स्त्र्याद्यनिष्टस्वप्रदर्शनेन यथा, तथा संयतचित्तः सन्नित्यर्थः । स एवंभूतो यदि स्त्रियं पश्येत्स्वप्नेषु, तदा विद्यात्समृद्धं ममेदं कर्मेति ॥

**तदेष श्लोको यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने तस्मिन्स्वप्ननिदर्शने ॥८॥ इति द्वितीयः खंडः ॥**

तदेतस्मिन्नर्थ एष श्लोको मंत्रोऽपि भवति । यदा कर्मसु काम्येषु कामा- र्थेषु स्त्रियं स्वप्नेषु स्वप्नदर्शनेषु स्वप्नकालेषु वा पश्यति, समृद्धिं तत्र जानीयात् । कर्मणां फलनिष्पत्तिर्भविष्यतीति जानीयादित्यर्थः । तस्मिन्स्त्र्यादिप्रशस्तस्वप्न- दर्शने सतीत्यभिप्रायः । द्विरुक्तिः कर्मसमाप्त्यर्था ॥ ५.२.—

ब्रह्मादिस्तंबपर्यंताः संसारगतयो वक्तव्या वैराग्यहेतोर्मुमुक्षूणामित्यतः आख्यायिकारभ्यते—

**श्वेतकेतुर्हारुणेयः पंचालानां समितिमेयाय तं ह प्रवाहणो जैव रुवाच कुमारानु त्वाशिषत्पितेत्यनु हि भगव इति ॥१॥**

श्वेतकेतुर्नामतो, ह इत्यैतिह्यार्थः, अरुणस्यापत्यमारुणिस्तस्यापत्यमारु पंचालानां जनपदानां समितिं सभामियायाजगाम। तमागतवन्तं ह प्रवा नामतो जीवलस्यापत्यं जैवलिरुवाचोक्तवान्। हे कुमारानु त्वा त्वामशिषद शिषत्पिता? किमनुशिष्टस्त्वं पित्रेत्यर्थः। इत्युक्तः स आह — अनु ह्यनुशिष्टे स्मि भगव इति सूचयन्नाह ॥

**वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुन वर्तन्त३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्य र्तना३ इति न भगव इति ॥२॥**

तं होवाच — यद्यनुशिष्टोऽसि, वेत्थ यदितोऽस्माल्लोकादध्यूर्ध्वं यत्प्र प्रयन्ति यद्गच्छन्ति तत्किं जानीष इत्यर्थः। न भगव इत्याहेतरो, न जाने तद्यत्पृच्छसि। एवं तर्हि वेत्थ जानीषे यथा येन प्रकारेण पुनरावर्तन्त इति भगव इति प्रत्याह। वेत्थ पथोर्मार्गयोः सहप्रयाणयोर्देवयानस्य पितृयाणस्य व्यावर्तना व्यावर्तनमितरेतरवियोगस्थानं सह गच्छतामित्यर्थः। न भगव इ

**वेत्थ यथासौ लोको न संपूर्यत३ इति न भगव इति वेत्थ य पंचम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥३॥**

वेत्थ यथासौ लोकः पितृसंबंधी यं प्राप्य पुनरावर्तन्ते, बहुभिः प्रया रपि येन कारणेन न संपूर्यत इति। न भगव इति प्रत्याह। वेत्थ यथा क्रमेण पंचम्यां पंचसंख्याकायामाहुतौ हुतायामाहुतिनिर्वृत्ता आहुतिसाधनाश्च पुरुषवचसः पुरुष इत्येवं वचोऽभिधानं यासां हूयमानानां क्रमेण षष्ठाहुतिभूत ताः पुरुषवचसः पुरुषशब्दवाच्या भवन्ति पुरुषाख्यां लभन्त इत्यर्थः। इत्यु नैव भगव इत्याह। नैवाहमत्र किंचन जानामीत्यर्थः॥

**अथानु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात्कथं सोऽनुशि ब्रुवीतेति स हायस्तः पितुरर्धमेयाय तं होवाचाननुशिष्य वाव किल भगवानब्रवीदनु त्वाशिषमिति ॥४॥**

अथैवमज्ञः सन्किमनु कस्मात्त्वमनुशिष्टोऽस्मीत्यवोचथा उक्तवानसि यो हीमानि मया पृष्टान्यर्थजातानि न विद्यान्न विजानीयात्कथं स विद्वत्स्

ऽस्मीति ब्रुवीत । इत्येवं स श्वेतकेतू राज्ञा आयस्त आयासितः सन्पितुरर्धं
मियायागतवांस्तं च पितरमुवाच— अननुशिष्यानुशासनमकृत्वैव मा मां किल
ान्समावर्तनकालेऽब्रवीदुक्तवाननु त्वाशिषमन्वशिषं त्वामिति ॥

**पंच मा राजन्यबंधुः प्रश्नानप्राक्षीत्तेषां नैकंचनाशकं विवक्तुमिति स
ाच यथा मा त्वं तदैतानवदो यथाहमेषां नैकंचन वेद यद्यहमिमानवे-
ं कथं ते नावक्ष्यमिति ॥५॥ स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह
ायार्हांचकार स ह प्रातः सभाग उदेयाय तं होवाच मानुषस्य भगवन्
म वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन्मानुषं वित्तं
ाव कुमारस्यांते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव ॥**

यतः पंच पंचसंख्याकान्प्रश्नान् राजन्यबंधू राजन्या बंधवोऽस्येति राजन्य-
स्वयं दुर्वृत्त इत्यर्थः, अप्राक्षीत्पृष्टवांस्तेषां प्रश्नानां नैकंचनैकमपि नाशकं न
वानहं विवक्तुं विशेषेणार्थतो निर्णेतुमित्यर्थः । स होवाच पिता— यथा मा
वत्स त्वं तदा आगतमात्र एवैतान्प्रश्नानवद उक्तवानसि, तेषां नैकंचनाशकं
क्तुमिति, तथा मां जानीहि, त्वदीयाज्ञानेन लिंगेन मम तद्विषयमज्ञानं
ीहीत्यर्थः । कथं, यथाहमेषां प्रश्नानामेकंचनैकमपि न वेद न जान इति ।
त्वमेवांग एतान्प्रश्नान्न जानीषे तथाहमप्येतान्न जान इत्यर्थः । अतो मय्य-
ाभावो न कर्तव्यः । कुत एतदेवं, यतो न जाने । यद्यहमिमान्प्रश्नानवेदिष्यं
ातवानस्मि कथं ते तुभ्यं प्रियाय पुत्राय समावर्तनकाले पुरा नावक्ष्यं नोक्त-
स्मि । इत्युक्त्वा स ह गौतमो गोत्रतो राज्ञो जैवलेरर्धं स्थानमेयाय गतवान् ।
ह गौतमाय प्राप्तायार्हामर्हणां चकार कृतवान् । स च गौतमः कृतातिथ्य
त्वा परेद्युः प्रातःकाले सभागे सभां गते राज्ञ्युदेयाय । भजनं भागः पूजा
सह भागेन वर्तमानो वा सभागः पूज्यमानोऽन्यैः स्वयं गौतम उदेयाय
ानमुद्गतवान् । तं होवाच गौतमं राजा— मानुषस्य भगवन्गौतम मनुष्य-
धिनो वित्तस्य ग्रामादेर्वरं वरणीयं कामं वृणीथाः प्रार्थयेथाः । स होवाच
मः— तवैव तिष्ठतु राजन्मानुषं वित्तम् । यामेव कुमारस्य मम पुत्रस्यांते
पे वाचं पंचप्रश्नलक्षणामभाषथा उक्तवानसि, तामेव वाचं मे मह्यं ब्रूहि
य । इत्युक्तो गौतमेन राजा स ह कृच्छ्री दुःखी बभूव । कथं त्विदमिति ॥

**तं ह चिरं वसेत्याज्ञापयांचकार तं होवाच यथा मा त्वं गौतमावदो**

**यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति तस्मादु सर्वेषु लोकेषु स्यैव प्रशासनमभूदिति तस्मै होवाच ॥७॥ इति तृतीयः खंडः ॥३॥**

स ह कृच्छ्रीभूतोऽप्रत्याख्येयं ब्राह्मणं मन्वानो न्यायेन विद्या वक्त सत्वा तं ह गौतमं चिरं दीर्घकालं वसेत्येवमाज्ञापयांचकाराज्ञप्तवान् । प्रख्यातवान्राजा विद्यां, यच्च पश्चाच्चिरं वसेत्याज्ञप्तवान्, तन्निमित्तं ब्राह्मणं षयति हेतुवचनोक्त्या । तं होवाच राजा— सर्वविद्यो ब्राह्मणोऽपि सन्यथ प्रकारेण मा मां हे गौतमावदस्त्वं, तामेव विद्यालक्षणां वाचं मे ब्रूहि, इत्यः तेन त्वं जानीहि । तत्रास्ति वक्तव्यं— यथा येन प्रकारेणेयं विद्या प्राक् ब्राह्मणान्न गच्छति न गतवती, न च ब्राह्मणा अनया विद्ययाऽनुशासितव तथैतत्प्रसिद्धं लोके यतः, तस्मादु पुरा पूर्वं सर्वेषु लोकेषु क्षत्रस्यैव क्षत्र एवानया विद्यया प्रशासनं प्रशास्तृत्वं शिष्याणामभूद्बभूव । क्षत्रियपरंपर विद्यैतावन्तं कालमागता । तथाप्यहमेतां तुभ्यं वक्ष्यामि, त्वत्संप्रदाना ब्राह्मणान्गामिष्यति । अतो मया यदुक्तं तत्क्षंतुमर्हसीत्युक्त्वा तस्मै हो विद्यां राजा ॥ इति तृतीयः खंडः॥ ५.३

'पंचम्यामाहुतावापः' इत्ययं प्रश्नः प्राथम्येनापाक्रियते । तदपाकरण इतरेषामपाकरणमनुकूलं भवेदिति । अग्निहोत्राहुत्योः कार्यारंभो यः स वाजसनेयके— "तं प्रति प्रश्नाः । उत्क्रांतिराहुत्योर्गतिः प्रतिष्ठा तृप्तिः पुनराव लोकं प्रत्युत्थायी" इति । तेषां चापाकरणमुक्तं तत्रैव— "ते वा एते आ हुते उत्क्रामतस्ते अंतरिक्षमाविशतस्ते अंतरिक्षमेवाहवनीयं कुर्वाते वायुं सा मरीचीरेव शुक्रामाहुतिं ते अंतरिक्षं तर्पयतस्ते तत उत्क्रामत इत्याद्येवमेव वाहिवं तर्पयतस्ते तत आवर्तेते । इमामाविश्य तर्पयित्वा पुरुषमाविशतः । स्त्रियमाविश्य लोकं प्रत्युत्थायी भवति" इति । तत्राग्निहोत्राहुत्योः कार्यारंभम मेवंप्रकारं भवतीत्युक्तम् । इह तु तं कार्यारंभमग्निहोत्रापूर्वविपरिणामलः पंचधा प्रविभज्याग्नित्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विधित्सन्नाह—

**असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽह र्चिश्चंद्रमा अंगारा नक्षत्राणि विस्फुलिंगाः ॥१॥**

असौ वाव लोको गौतमाग्निरित्यादि । इह सायंप्रातरग्निहोत्राहुती हु पयआदिसाधने श्रद्धापुरःसरे आहवनीयाग्निसमिद्धूमार्चिरंगारविस्फुलिंगभावि

ोदिकारकभाविते चांतरिक्षक्रमेणोत्क्रम्य द्युलोकं प्रविशन्त्यौ सूक्ष्मभूते अप्स-
ायित्वादप्शब्दवाच्ये श्रद्धाहेतुत्वाच्च श्रद्धाशब्दवाच्ये। तयोरधिकरणोऽग्निरन्यच्च
बिंधं समिदार्दीत्युच्यते । या चासावग्न्यादिभावना आहुत्योः सापि तथैव
देश्यते । असौ वाव लोकोऽग्निर्हे गौतम यथाग्निहोत्राधिकरणमाहवनीय इह ।
ाग्नेर्द्युलोकाख्यस्य आदित्य एव समित्तेन हीद्धोऽसौ लोको दीप्यते । अतः
ाधनात्समिदादित्यः । रश्मयो धूमस्तदुत्थानात्, समिधो हि धूम उत्तिष्ठति ।
रार्चिः प्रकाशसामान्यात्, आदित्यकार्यत्वाच्च । चंद्रमा अंगाराः । अहःप्रश-
भेव्यक्तः । अर्चिषो हि प्रशमेऽङ्गारा अभिव्यज्यन्ते । नक्षत्राणि विस्फुलिंगाः
मसोऽवयवा इव विप्रकीर्णत्वसामान्यात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा ावति ॥२॥ इति चतुर्थः खंडः ॥४॥**

तस्मिन्नेतस्मिन्यथोक्तलक्षणेऽग्नौ देवा यजमानप्राणा अग्न्यादिरूपा अधि-
तम् । श्रद्धामग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्मा आपः श्रद्धाभाविताः श्रद्धा
यन्ते । "पंचम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्यपां होम्यतया
श्रुतत्वात् । "श्रद्धा वा आपः श्रद्धामेवारभ्य प्रणीय प्रचरन्ति" इति च
ायते । तां श्रद्धामब्रूपां जुह्वति । तस्या आहुतेः सोमो राजा अपां श्रद्धा-
ब्दवाच्यानां द्युलोकाग्नौ हुतानां परिणामः सोमो राजा संभवति । यथर्ग्वेदा-
प्परसा ऋगादिमधुकरोपनीतास्ते आदित्ये यशआदिकार्यं रोहितादिरूपलक्ष-
ारभन्ते इत्युक्तं, तथेमा अग्निहोत्राहुतिसमवायिन्यः सूक्ष्माः श्रद्धाशब्दवाच्या
ो द्युलोकमनुप्रविश्य चांद्रं कार्यमारभन्ते फलरूपमग्निहोत्राहुत्योः । यजमाना-
तत्कर्तार आहुतिमया आहुतिभावनाभाविता आहुतिरूपेण कर्मणा आकृष्टाः
ाप्समवायिनो द्युलोकमनुप्रविश्य सोमभूता भवन्ति । तदर्थं हि तैरग्निहोत्रं
म् । अत्र त्वाहुतिपरिणाम एव पंचाग्निसंबंधक्रमेण प्राधान्येन विवक्षित
सनार्थं न यजमानानां गतिः । तां त्वविदुषां धूमादिक्रमेणोत्तरत्र वक्ष्यति,
षां चोत्तरां विद्याकृताम् ॥ इति चतुर्थः खंडः ॥ ५.४.—

**पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरश-गारा ह्रादनयो विस्फुलिंगाः ॥१॥**

द्वितीयहोमपर्यायार्थमाह— पर्जन्यो वाव पर्जन्य एव गौतमाग्निः पर्जन्यो

नाम वृष्ट्युपकरणाभिमानी देवताविशेषः । तस्य वायुरेव समित् वायुना पर्जन्योऽग्निः समिध्यते । पुरोवातादिप्राबल्ये वृष्टिदर्शनात् । अभ्रं धूमो, धू कार्यत्वाद्धूमवच्च लक्ष्यमाणत्वात् । विद्युदर्चिः, प्रकाशसामान्यात् । अशनिरंग काठिन्याद्विद्युत्संबंधाद्वा । ह्रादनयो विस्फुलिंगाः । ह्रादनयो गर्जितशब्दाः मेघ विप्रकीर्णत्वसामान्यात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुते संभवति ॥२॥ इति पंचमः खंडः ॥**

तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्ववत्सोमं राजानं जुह्वति । तस्या आहुते संभवति । श्रद्धाख्या आपः सोमाकारपरिणता द्वितीये पर्याये पर्जन्याग्निं प्रा वृष्टित्वेन परिणमन्ते ॥ इति पंचमः खंडः ॥ ५.५.-

**पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धू रात्रिरर्चिर्दिशोंऽगारा अवान्तरदिशो विस्फुलिंगाः ॥१॥**

पृथिवी वाव गौतमाग्निरित्यादि पूर्ववत् । तस्याः पृथिव्याख्यस्याग्नेः सं त्सर एव समित् । संवत्सरेण हि कालेन समिद्धा पृथिवी व्रीह्यादिनिष्पर भवति । आकाशो धूमः पृथिव्या इवोत्थित आकाशो दृश्यते । यथाऽग्नेर्धूमः रात्रिरर्चिः, पृथिव्या हि अप्रकाशात्मिकाया अनुरूपा रात्रिः । तमोरूपत्वात अग्नेरिवानुरूपमर्चिः । दिशोंऽगारा, उपशांतत्वसामान्यात् । अवांतरदिशो विस्फु लिंगाः क्षुद्रत्वसामान्यात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नं संभवति ॥२ इति षष्ठः खंडः ॥**

तस्मिन्नित्यादि समानम् । तस्या आहुतेरन्नं व्रीहियवादि संभवति ॥५.६.-

**पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वार्चिश्च क्षुरंगाराः श्रोत्रं विस्फुलिंगाः ॥१॥**

पुरुषो वाव गौतमाग्निः । तस्य वागेव समित् । वाचा हि मुखेन समिध्य पुरुषो न मूकः । प्राणो धूमो, धूम इव मुखान्निर्गमनात् । जिह्वार्चिर्लोहितत्वात् चक्षुरंगारा भास आश्रयत्वात् । श्रोत्रं विस्फुलिंगाः । विप्रकीर्णत्वसाम्यात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः संभवति ॥२॥ इति सप्तमः खंडः ॥**

समानमन्यत् । अन्नं जुह्वति व्रीह्यादिसंस्कृतम् । तस्या आहुते रेतः
ति ॥२॥ इति सप्तमः खंडः ॥ ५.७.—

**योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमंत्रयते स धूमो
ार्चिर्यदंतः करोति तेंऽगारा अभिनंदा विस्फुलिंगाः ॥१॥**

योषा वाव गौतमाग्निः । तस्या उपस्थ एव समित् । तेन हि सा पुत्रा-
त्नाय समिध्यते । यदुपमंत्रयते स धूमः । स्त्रीसंभवादुपमंत्रणस्य । योनि-
ाहितत्वात् । यदंतः करोति तेंऽगारा अग्निसंबंधात् । अभिनंदाः सुखलवा
लिंगाः क्षुद्रत्वात् ॥

**तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति ॥२॥
अष्टमः खंडः ॥**

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेर्गर्भः संभवतीति ।
द्धासोमवर्षान्नरेतोहवनपर्यायक्रमेणाप एव गर्भीभूतास्ताः । तत्रापामाहुति-
येत्वात्प्राधान्यविवक्षा— आपः पंचम्यामाहुतौ पुरुषवचसो भवन्तीति ।
ा एव केवलाः सोमादिकार्यमारभन्ते । न चापो अत्रिवृत्कृताः सन्तीति ।
तत्वेऽपि विशेषसंज्ञालाभो दृष्टः पृथिवीयमिमा आपोऽयमग्निरित्यन्यतम-
ानिमित्तः । तस्मात्समुदितान्येव भूतान्यब्बाहुल्यात्कर्मसमवायीनि सोमा-
ारंभकाण्याप इत्युच्यन्ते । दृश्यते च द्रवबाहुल्यं सोमवृष्ट्यन्नरेतोदेहेषु ।
च शरीरं यद्यपि पार्थिवम् । तत्र पंचम्यामाहुतौ हुतायां रेतोरूपा आपो
ताः ॥ ५.८.—

**इति तु पंचम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो
दश वा नव वा मासानंतः शयित्वा यावद्वाथ जायते ॥१॥**

इति त्वेवं तु पंचम्यामाहुतावापः पुरुषवचसो भवन्तीति व्याख्यात एकः
यत्तु द्युलोकादिमां प्रत्यावृत्तयोराहुत्योः पृथिवीं पुरुषं स्त्रियं क्रमेणाविश्य
त्युत्थायी भवतीति वाजसनेयके उक्तं, तत्प्रासंगिकमिहोच्यते । इह च
प्रश्ने उक्तं— वेत्थ यदितोऽधि प्रजाः प्रयन्तीति । तस्य चायमुपक्रमः ।
ाऽपां पंचमः परिणामविशेषः आहुतिकर्मसमवायिनीनां श्रद्धाशब्दवाच्या-
ावृत उल्बेन जरायुणा आवृतो वेष्टितो दश वा नव वा मासानंतर्मातुः
ायित्वा यावद्वा यावता कालेन न्यूनेनातिरिक्तेन वा अथानंतरं जायते ॥

उल्बावृत इत्यादि वैराग्यहेतोरिदमुच्यते । कष्टं हि मातुः कुक्षौ म
षवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्वाशुचिपटावृतस्य लोहितरे
बीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्धमानस्य निरुद्धशक्तिबलवी
प्रज्ञाचेष्टस्य शयनम् । ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृति
वैराग्यं ग्राहयति, मुहूर्तमप्यसह्यं दश वा नव वा मासानतिदीर्घकालमंतः
त्वेति च ॥

**स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति
एवेतो यतः संभूतो भवति ॥२॥ इति नवमः खंडः ॥**

स एवं जातो यावदायुषं पुनः पुनर्घटीयंत्रवद्गमनागमनाय कर्म
लालचक्रवद्वा तिर्यग्भ्रमणाय यावत्कर्मणोपात्तमायुस्तावज्जीवति । तमेनं
युषं प्रेतं मृतं दिष्टं कर्मणा निर्दिष्टं परलोकं प्रति, यदि चेज्जीवन्वैदिके
ज्ञाने वाधिकृतः, तमेनं मृतमितोऽस्माद्ग्रामादग्नयेऽन्यर्थमृत्विजो हरन्ति
वा अंत्यकर्मणे । यत एवेत आगतोऽग्नेः सकाशाच्छ्रद्धाद्याहुतिक्रमेण,
पंचभ्योऽग्निभ्यः संभूत उत्पन्नो भवति, तस्मा एवाग्नये हरन्ति स्वामेव
ग्निमापादयन्तीत्यर्थः ॥ ५

**तद्य इत्थं विदुः । ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽ
भिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षड्डुदङेति
स्तान् ॥१॥ मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चंद्रमसं चं
विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवयानः पंथा इति**

'वेत्थ यदितोऽधि प्रजाः प्रयन्ति' इत्ययं प्रश्नः प्रत्युपस्थितोऽपा
तया । तत्तत्र लोकं प्रत्युत्थितानामधिकृतानां गृहमेधिनां य इत्थमेवं
पंचाग्निदर्शनं— द्युलोकाद्यग्निभ्यो वयं क्रमेण जाता अग्निस्वरूपाः पंचाग्न्या
इत्येवं विदुर्जानीयुः । कथमवगम्यत इत्थं विदुरिति गृहस्था एवोच्यन्ते
इति? गृहस्थानां ये त्वनित्थंविदः केवलेष्टापूर्तदत्तपरास्ते धूमादिना चंद्रं
न्तीति वक्ष्यति । ये चारण्योपलक्षिता वैखानसाः परिव्राजकाश्च श्रद्धा त
पासते, तेषां चेत्थंविद्भिः सहार्चिरादिना गमनं वक्ष्यति, पारिशेष्यादग्निहो
संबंधाच्च गृहस्था एव गृह्यन्ते इत्थं विदुरिति ॥

ननु ब्रह्मचारिणोऽप्यगृहीता ग्रामश्रुत्याऽरण्यश्रुत्या चानुपलक्षिता ।

पारिशेष्यसिद्धिः । नैष दोषः । पुराणस्मृतिप्रामाण्यादूर्ध्वरेतसां नैष्ठिकब्रह्म-
णामुत्तरेणार्यम्णः पंथाः प्रसिद्धः । अतस्तेऽप्यरण्यवासिभिः सह गमिष्यन्ति।
र्वाणकास्तु स्वाध्यायग्रहणार्था इति न विशेषनिर्देशार्हाः ।

ननु ऊर्ध्वरेतस्त्वं चेदुत्तरमार्गप्रतिपत्तिकारणं पुराणस्मृतिप्रामाण्यादिष्यत, वेत्त्वमनर्थकं प्राप्तम् । न । गृहस्थान्प्रत्यर्थवत्त्वात् । ये गृहस्था अनित्थं-त्तेषां स्वभावतो दक्षिणो धूमादिः पंथाः प्रसिद्धः, तेषां य इत्थं विदुः ां वान्यद्ब्रह्म विदुः । 'अथ यदु चैवास्मिञ्शव्यं कुर्वन्ति यदि च नार्चिषमेव' लिंगादुत्तरेण ते गच्छन्ति । ननूर्ध्वरेतसां गृहस्थानां च समाने आश्रमित्वे रेतसामेवोत्तरेण पथा गमनं न गृहस्थानामिति न युक्तं अग्निहोत्रादिवैदिक-ाहुल्ये च सति । नैष दोषः । अपूता हि ते । शत्रुमित्रसंयोगनिमित्तौ हि रागद्वेषौ । तथा धर्माधर्मौ हिंसानुग्रहनिमित्तौ । हिंसानृतमायाब्रह्मचर्यादि ह्मशुद्धिकारणमपरिहार्यं तेषाम् । अतोऽपूताः । अपूतत्वान्नोत्तरेण पथा गम- । हिंसानृतमायाब्रह्मचर्यादिपरिहाराच्च शुद्धात्मानो हीतरे, शत्रुमित्रराग-देपरिहाराच्च विरजसः, तेषां युक्त उत्तरः पंथाः । तथा च पौराणिकाः— प्रजामीषिरेऽधीरास्ते श्मशानानि भेजिरे । ये प्रजां नेषिरे धीरास्तेऽमृतत्वं हि रे" इत्याहुः । इत्थंविदां गृहस्थानामरण्यवासिनां च समानमार्गत्वेऽमृतत्व-च सत्यरण्यवासिनां विद्यानर्थक्यं प्राप्तम् । तथाच श्रुतिविरोधः "न तत्र णा यन्ति नाविद्वांसस्तपस्विनः" इति । 'स एनमविदितो न भुनक्ति' इति विरुद्धम् । न । आभूतसंप्लवस्थानस्यामृतत्वेन विवक्षितत्वात् । तत्रैवोक्तं णिकैः— "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति । यच्चात्यंतिकम-वं तदपेक्षया 'न तत्र दक्षिणा यन्ति' 'स एनमविदितो न भुनक्ति' इत्याद्याः धः, इत्यतो न विरोधः । 'न च पुनरावर्तन्ते' इति 'इमं मानवमावर्तं ना-ते' इत्यादिश्रुतिविरोध इति चेत् । न । इमं मानवमिति विशेषणात् 'तेषा-न पुनरावृत्तिरस्ति' इति च । यदि ह्येकांतेनैव नावर्तेरन्निमं मानवमिहेति च षणमनर्थकं स्यात् । इममिहेत्याकृतिमात्रमुच्यत इति चेत् । न । अनावृत्ति-नैव नित्यानावृत्त्यर्थस्य प्रतीतत्वादाकृतिकल्पनाऽनर्थिका । अत इममिहेति शेषणार्थवत्त्वायान्यत्रावृत्तिः कल्पनीया । न च सदेकमेवाद्वितीयमित्येवं यवतां मूर्धन्यया नाड्याऽर्चिरादिमार्गेण गमनम् । 'ब्रह्मैव सन्ब्रह्माप्येति'

'तस्मात्तत्सर्वमभवत्' 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते' दिश्रुतिशतेभ्यः ॥

ननु तस्माज्जीवादुच्चिक्रमिषोः प्राणा नोत्क्रामन्ति, सहैव गच्छन्तीत्य कल्प्यत इति चेत्। न। 'अत्रैव समवलीयन्ते' इति विशेषणानर्थक्य 'सर्वे प्राणा अनूत्क्रामन्ति' इति च प्राणैर्गमनस्य प्राप्तत्वात्। तस्मादुत्क्रा त्यनाशंकैवैषा। यदापि मोक्षस्य संसारगतिवैलक्षण्यात्प्राणानां जीवेन सह माशंक्य तस्मान्नोत्क्रामन्तीत्युच्यते, तदापि 'अत्रैव समवलीयन्ते' इति णमनर्थकं स्यात्। न च प्राणैर्वियुक्तस्य गतिरुपपद्यते जीवत्वं वा। सर्व त्सदात्मनो निरवयवत्वात्प्राणसंबंधमात्रमेव ह्यग्निविस्फुलिंगवज्जीवत्वभेद मित्यतः तद्वियोगे जीवत्वं गतिर्वा न शक्या परिकल्पयितुं श्रुतयश्चेत्प्रमाणम् सतोऽणुरवयवः स्फुटितो जीवाख्यः सद्रूपं छिद्रीकुर्वन्गच्छतीति शक्यं व तुम्। तस्मात् "तयोर्ध्वमायन्नमृतत्वमेति" इति सगुणब्रह्मोपासकस्य प्राणै नाड्या गमनं, सापेक्षमेव चामृतत्वं न साक्षान्मोक्ष, इति गम्यते। 'तदपर पूस्तदैरं मदीयं सरः' इत्याद्युक्त्वा 'तेषामेवैष ब्रह्मलोकः' इति विशेषणात्

अतः पंचाग्निविदो गृहस्था ये चेमेऽरण्ये वानप्रस्थाः परिव्राजकाश्च नैष्ठिकब्रह्मचारिभिः श्रद्धा तप इत्येवमाद्युपासते श्रद्दधानास्तपस्विनश्चेत उपासनशब्दस्तात्पर्यार्थः। इष्टापूर्ते दत्तमित्युपासत इति यद्वत्। श्रुत्यंतर सत्यं ब्रह्म हिरण्यगर्भाख्यमुपासते ते सर्वेऽर्चिषमर्चिरभिमानिनीं देवताम वन्ति प्रतिपद्यन्ते। समानमन्यच्चतुर्थगतिव्याख्यानेन। एष देवयानः व्याख्यातः सत्यलोकावसानो न अंडाद्बहिः। "यदंतरा पितरं मातरं च मंत्रवर्णात् ॥

**अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभ धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान्नैते सं मभिप्राप्नुवन्ति ॥३॥**

अथेत्यर्थांतरप्रस्तावनार्थो, य इमे गृहस्था ग्रामे। ग्राम इति गृ नामसाधारणं विशेषणमरण्यवासिभ्यो व्यावृत्त्यर्थं, यथा वानप्रस्थपरिव्रा अरण्यं विशेषणं गृहस्थेभ्यो व्यावृत्त्यर्थं तद्वत्। इष्टापूर्ते इष्टमग्निहोत्रादि कर्म, पूर्तं वापीकूपतडागारामादिकरणम्। दत्तं बहिर्वेदि यथाशक्त्यर्हेभ्यो संविभागो दत्तम्। इत्येवंविधं परिचरणपरित्राणाद्युपासते। इतिशब्दस्य

र्थित्वात् । ते दर्शनवर्जितत्वाद्धूमं धूमाभिमानिनीं देवतामभिसंभवन्ति
द्यन्ते । तयातिवाहिता धूमाद्रात्रिं रात्रिदेवतां रात्रेरपरपक्षदेवतां एवमेव
क्षाभिमानिनीं अपरपक्षात् यान्षण्मासान्दक्षिणा दक्षिणां दिशमेति सविता ।
सान्दक्षिणायनषण्मासाभिमानिनीर्देवताः प्रतिपद्यन्त इत्यर्थः । संघचा-
हि षण्मासदेवता इति मासानिति बहुवचनप्रयोगस्तासु । नैते कर्मिणः
ः संवत्सरं संवत्सराभिमानिनीं देवतामभिप्राप्नुवन्ति । कुतः पुनः संवत्सर-
प्रसंगो यतः प्रतिषिध्यते ? अस्ति हि प्रसंगः । संवत्सरस्य ह्येकस्यावयव-
दक्षिणोत्तरायणे, तत्रार्चिरादिमार्गप्रवृत्तानां उदगयनमासेभ्योऽवयविनः संव-
य प्राप्तिरुक्ता । अत इहापि तदवयवभूतानां दक्षिणायनमासानां प्राप्तिं
तदवयविनः संवत्सरस्यापि पूर्ववत्प्राप्तिरापन्ना । इत्यतस्तत्प्राप्तिः प्रतिषि-
- नैते संवत्सरमभिप्राप्नुवन्तीति ॥

**मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चंद्रमसमेष सोमो
लदेवानामन्नं तं देवा भक्षयन्ति ॥४॥**

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चंद्रमसम् । कोऽसौ यस्तैः
ते चंद्रमा, य एष दृश्यतेऽन्तरिक्षे सोमो राजा ब्राह्मणानां, तदन्नं देवानां,
द्रमसमन्नं देवा इंद्रादयो भक्षयन्ति । अतस्ते धूमादिना गत्वा चंद्रभूताः
गा देवैर्भक्ष्यन्ते । नन्वनर्थायेष्टादिकरणं यद्यन्नभूता देवैर्भक्ष्येरन् । नैष दोषः ।
मित्युपकरणमात्रस्य विवक्षितत्वात् । न हि ते कवलोत्क्षेपेण देवैर्भक्ष्यन्ते ।
हिं उपकरणमात्रं देवानां भवन्ति ते स्त्रीपशुभृत्यादिवत् । दृष्टश्चान्नशब्द
रणेषु, स्त्रियोऽन्नं पशवोऽन्नं विशोऽन्नं राज्ञामित्यादि । न च तेषां स्त्र्यादीनां
पभोग्यत्वेऽप्युपभोगो नास्ति । तस्मात्कर्मिणो देवानामुपभोग्या अपि सन्तः
ते देवैः क्रीडन्ति । शरीरं च तेषां सुखोपभोगयोग्यं चंद्रमंडल आप्यमार-
। तदुक्तं पुरस्ताच्छ्रद्धाशब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा संभव-
। ता आपः कर्मसमवायिन्य इतरैश्च भूतैरनुगता द्युलोकं प्राप्य चंद्रत्व-
ताः शरीराद्यारंभिका इष्टाद्युपासकानां भवन्ति । अंत्यायां च शरीराहुतावग्नौ
ग्रामग्निना दह्यमाने शरीरे तदुत्था आपो धूमेन सहोर्ध्वं यजमानमावेष्ट्य
डलं प्राप्य कुशमृत्तिकास्थानीया बाह्यशरीरारंभिका भवन्ति । तदारब्धेन च
णेष्टादिफलमुपभुंजाना आसते ॥

**तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमा- शमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति ॥५॥**

यावत्तदुपभोगनिमित्तस्य कर्मणः क्षयः, संपतन्ति येनेति संपातः कर्म क्षयो यावत्संपातं यावत्कर्मणः क्षय इत्यर्थः । तावत्तस्मिंश्चंद्रमंडल उषित्वा अथ नंतरमेतमेव वक्ष्यमाणमध्वानं मार्गं पुनर्निवर्तन्ते । पुनर्निवर्तन्त इति प्रयोगात् र्वमप्यसकृच्चंद्रमंडलं गता निवृत्ताश्चासन्निति गम्यते । तस्मादिह लोके इष्टा कर्मोपचित्य चंद्रं गच्छन्ति । तत्क्षये चावर्तन्ते । क्षणमात्रमपि तत्र स्थातुं लभ्यते स्थितिनिमित्तकर्मक्षयात् स्नेहक्षयादिव प्रदीपस्य ॥

तत्र किं येन कर्मणा चंद्रमंडलमारूढस्तस्य सर्वस्य क्षये तस्मादवरोह किं वा सावशेष इति । किं ततः । यदि सर्वस्यैव क्षयः कर्मणः चंद्रमंडलस् स्यैव मोक्षः प्राप्नोति । तिष्ठतु तावत्तत्रैव । मोक्षः स्यान्न वेति । तत आगतस्य शरीरोपभोगादि न संभवति । "ततः शेषेण" इत्यादिस्मृतिविरोधश्च स्यात् ननु इष्टापूर्तदत्तव्यतिरेकेणापि मनुष्यलोके शरीरोपभोगनिमित्तानि कर्माण्यनेका संभवन्ति, न च तेषां चंद्रमंडल उपभोगः । अतोऽक्षीणानि तानि । यन्निमि चंद्रमंडलमारूढस्तान्येव क्षीणानीत्यविरोधः । शेषशब्दश्च सर्वेषां कर्मत्वसाम न्यादविरुद्धः । अत एव च तत्रैव मोक्षः स्यादिति दोषाभावः । विरुद्धानेकयोन्यु पभोगफलानां च कर्मणामेकैकस्य जंतोरारंभकत्वसंभवात् । न चैकस्मिन् जन्मनि सर्वकर्मणां क्षय उपपद्यते । ब्रह्महत्यादेश्चैकैकस्य कर्मणोऽनेकजन्मारंभकत्वस्मर णात् । स्थावरादिप्राप्तानां चात्यंतमूढानामुत्कर्षहेतोः कर्मण आरंभकत्वासंभवात् गर्भभूतानां च स्रंसमानानां कर्मासंभवे संसारानुपपत्तिः । तस्मान्नैकस्मिन् जन्मनि सर्वेषां कर्मणामुपभोगः ॥

यत्तु कैश्चिदुच्यते-- सर्वकर्माश्रयोपमर्देन प्रायेण कर्मणां जन्मारंभकत्वम् तत्र कानिचित्कर्माण्यनारंभकत्वेनैव तिष्ठन्ति कानिचिज्जन्मारभतः इति नोप पद्यते । मरणस्य सर्वकर्माभिव्यंजकत्वात्स्वगोचराभिव्यंजकप्रदीपवदिति । तद सत् । सर्वस्य सर्वात्मकत्वाभ्युपगमात् । न हि सर्वस्य सर्वात्मकत्वे देशकाल निमित्तावरुद्धत्वात्सर्वात्मनोपमर्दः कस्यचित्क्वचिदभिव्यक्तिर्वा सर्वात्मनोपपद्यते तथा कर्मणामपि साश्रयाणां भवेत् । यथा च पूर्वानुभूतमनुष्यमयूरमर्कटादिजन्मा भिसंस्कृता विरुद्धानेकवासना मर्कटत्वप्रापकेण कर्मणा मर्कटजन्म आरभमाणेन

नोपमृद्यन्ते तथा कर्माण्यपि अन्यजन्मप्राप्तिनिमित्तानि नोपमृद्यन्त इति युक्तम् । यदि हि सर्वाः पूर्वजन्मानुभववासना उपमृद्येरन्मर्कटजन्मनिमित्तेन कर्मणा मर्कटजन्मन्यारब्धे मर्कटस्य जातमात्रस्य मातुः शाखायाः शाखांतरगमने मातुरुदरसंलग्नत्वादिकौशलं न प्राप्नोति । इह जन्मन्यनभ्यस्तत्वात् । न चातीतानंतरजन्मनि मर्कटत्वमेवासीत्तस्येति शक्यं वक्तुम् । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' इति श्रुतेः । तस्माद्वासनावत् नाशेषकर्मोपमर्द इति शेषकर्मसंभवः । यत एवं तस्माच्छेषेणोपभुक्तात्कर्मणः संसार उपपद्यत इति न कश्चिद्विरोधः ॥

कोऽसावध्वा यं प्रति निवर्तन्त इत्युच्यते । यथेतं यथागतं निवर्तन्ते । ननु मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चंद्रमसमिति गमनक्रम उक्तो, न तथा निवृत्तिः । किं तर्ह्याकाशाद्वायुमित्यादि, कथं यथेतमित्युच्यते । नैष दोषः । आकाशप्राप्तिस्तुल्यत्वात्पृथिवीप्राप्तेश्च । न चात्र यथेतमेवेति नियमो अनेवंविधमपि निवर्तन्ते, पुनर्निवर्तन्त इति तु नियमः । अत उपलक्षणार्थमेतद्यथेतमिति । अतो भौतिकमाकाशं तावत्प्रतिपद्यन्ते । याः तेषां चंद्रमंडले शरीरारंभिका आप आसंस्तास्तेषां तत्रोपभोगनिमित्तानां कर्मणां क्षये विलीयन्ते । घृतसंस्थानमिवाग्निसंयोगे, ता विलीना अंतरिक्षस्था आकाशभूता इव सूक्ष्मा भवन्ति । ता अंतरिक्षाद्वायुर्भवन्ति । वायुप्रतिष्ठा वायुभूता इतश्च अमुतश्च ऊह्यमानास्ताभिः सह क्षीणकर्मा वायुभूतो भवति । वायुर्भूत्वा ताभिः सहैव धूमो भवति । धूमो भूत्वाभ्रमब्भरणमात्ररूपो भवति ॥

**अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिंचति तद्भूय एव भवति ॥६॥**

अभ्रं भूत्वा ततः सेचनसमर्थो मेघो भवति, मेघो भूत्वोन्नतेषु प्रदेशेष्वथ प्रवर्षति । वर्षधारारूपेण शेषकर्मा पततीत्यर्थः । ते व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इत्येवंप्रकारा जायन्ते । क्षीणकर्मणामनेकत्वाद्बहुवचननिर्देशः । मेघादिषु पूर्वेष्वेकरूपत्वादेकवचननिर्देशः । यस्माद्गिरितटदुर्गनदीसमुद्रारण्यमरुदेशादिसंनिवेशसहस्राणि वर्षधाराभिः पतितानाम् । अतस्तस्माद्धेतोर्वै खलु दुर्निष्प्रपतरं दुर्निष्क्रमणं दुर्निःसरणम् । यतो गिरितटादुदकस्रोतसोह्यमाना नदीः प्राप्नुवन्ति,

ततः समुद्रं, ततो मकरादिभिर्भक्ष्यन्ते, तेऽप्यन्येन, तत्रैव च सह मकरेण विलीनाः समुद्रांभोभिर्जलधरैराकृष्टाः पुनर्वर्षधाराभिर्मरुदेशे शिलातटे वा पतितास्तिष्ठन्ति, कदाचिद्व्यालमृगादिपीता भक्षिताश्चान्यैः, तेऽप्यन्यैः, प्रकाराः परिवर्तेरन्। कदाचिदभक्ष्येषु स्थावरेषु जातास्तत्रैव शुष्येरन्. ष्वपि स्थावरेषु जातानां रेतःसिग्देहसंबंधो दुर्लभ एव बहुत्वात्स्थावराणां, दुर्निष्क्रमणत्वम्। अथवा अतोऽस्माद्व्रीहियवादिभावात् दुर्निष्प्रपततरं दुर्निर्गम दुर्निष्प्रपतरमिति तकार एको लुप्तो द्रष्टव्यः। व्रीहियवादिभावो दुर्निष्प्रपतः दपि दुर्निष्प्रपताद्रेतःसिग्देहसंबंधो दुर्निष्प्रपततर इत्यर्थः। यस्मादूर्ध्वरेतोभि पुंस्त्वरहितैः स्थविरैर्वा भक्षिता अंतराले शीर्यन्ते, अनेकत्वादन्नादानाम्। चित्काकतालीयवृत्त्या रेतःसिग्भिर्भक्ष्यन्ते यदा, तदा रेतःसिग्भावं : कर्मणो वृत्तिलाभः। कथम्। यो यो ह्यन्नमत्त्यनुशयिभिः संश्लिष्टं रेतःसि रेतः सिञ्चत्यृतुकाले योषिति तद्भूय एव तदाकृतिरेव भवति। तदवयव भूयस्त्वं भूय इत्युच्यते रेतोरूपेण योषितो गर्भाशयेऽन्तःप्रविष्टोऽनु रेतसो रेतःसिगाकृतिभावितत्वात्। 'सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्' इति श्रुत्यंतरात्। अतो रेतःसिगाकृतिरेव भवतीत्यर्थः। तथाहि पुरुषा जायते गोर्गवाकृतिरेव न जात्यंतराकृतिः तस्मायुक्तं तद्भूय एव भवतीति।

ये त्वन्येऽनुशयिभ्यश्चंद्रमंडलमनारुह्य इहैव पापकर्मभिर्घोरैर्व्रीहियवा प्रतिपद्यन्ते पुनर्मनुष्यादिभावं तेषां नानुशयिनामिव दुर्निष्प्रपतरम्। कस्य कर्मणा हि तैर्व्रीहियवादिदेह उपात्त इति तदुपभोगनिमित्तक्षये व्रीह्यादिस्तं विनाशे यथाकर्मार्जितं देहान्तरं नवं नवं जलूकावत्संक्रमन्ते सविज्ञाना "सविज्ञानो भवति 'सविज्ञानमेवान्ववक्रामति" इति श्रुत्यंतरात्। यद्यप्युप करणाः सन्तो देहान्तरं गच्छन्ति तथापि स्वप्नवद्देहान्तरप्राप्तिनिमित्तकर्मोद्भू वासनाज्ञानेन सविज्ञाना एव देहान्तरं गच्छन्ति। श्रुतिप्रामाण्यात्। तथा रादिना धूमादिना च गमनं स्वप्न इवोद्भूतविज्ञानेन। लब्धवृत्तिकर्मनिमित्त मनस्य। न तथा अनुशयिनां व्रीह्यादिभावेन जातानां सविज्ञानमेव रेतःसिग् देहसंबंध उपपद्यते। नहि व्रीह्यादिलवनकंडनपेषणादौ च सविज्ञ स्थितिरस्ति। ननु चंद्रमंडलादपि अवरोहतां देहान्तरगमनस्य तुल्य जलूकावत्सविज्ञानता एव युक्ता। तथा सति घोरो नरकानुभव इष्ट

कारिणां चंद्रमंडलात् आरभ्य प्राप्तो यावत् ब्राह्मणादिजन्म । तथा च ते अनर्थायैवेष्टापूर्तादुपासनं विहितं स्यात् । श्रुतेश्चाप्रामाण्यं प्राप्तं वैदिकानां र्मणामनर्थानुबंधित्वात् । न । वृक्षारोहणपतनवद्विशेषसंभवात् । देहाद्देहान्तरं तेपित्सोः कर्मणो लब्धवृत्तित्वात्कर्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तम् । ाग्रमारोहत इव फलं जिघृक्षोः । तथार्चिरादिना गच्छतां सविज्ञानत्वं भवेत् । मादिना च चंद्रमंडलमारुरुक्षताम् । न तथा चंद्रमंडलादवरुरुक्षतां वृक्षाग्रादिव तां सचेतनत्वम् । यथा च मुद्गराद्यभिहतानां तदभिघातवेदनानिमित्तसंमूर्छि- ातिबद्धकरणानां स्वदेहेनैव देशाद्देशान्तरं नीयमानानां विज्ञानशून्यता दृष्टा, ा चंद्रमंडलान्मानुषादिदेहान्तरं प्रत्यवरुरुक्षतां स्वर्गभोगनिमित्तकर्मक्षयान्मृ- ताब्देहानां प्रतिबद्धकरणानाम् । अतस्तेऽपरित्यक्तदेहबीजभूताभिरद्भिर्मूर्छिता ाकाशादिक्रमेणेमामवरुह्य कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते प्रतिबद्ध- णतया अनुद्भूतविज्ञाना एव । तथा लवनकंडनपेषणसंस्कारभक्षणरसादिपरि- मरेतःसेककालेषु मूर्छितवदेव । देहान्तरारंभकस्य कर्मणोऽलब्धवृत्तित्वात् । ्बीजभूताप्संबंधापरित्यागेनैव सर्वास्ववस्थासु वर्तन्त इति जलूकावच्चेतनावत्त्वं विरुध्यते । अंतराले त्वविज्ञानं मूर्छितवदेवेत्यदोषः ॥ न च वैदिकानां कर्मणां सायुक्तत्वेनोभयहेतुत्वं शक्यमनुमातुम् । हिंसायाः शास्त्रचोदितत्वात् । "अहिं- न्सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति श्रुतेः शास्त्रचोदिताया हिंसाया नाधर्महेतुत्व- भ्युपगम्यते । अभ्युपगतेऽप्यधर्महेतुत्वे मंत्रैर्विषादिवत्तदपनयोपपत्तेर्न दुःख- ार्यारंभकत्वोपपत्तिर्वैदिकानां कर्मणां, मंत्रेणेव विषभक्षणस्येति ॥

**तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ाह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा भ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चंडाल- ोनिं वा ॥७॥**

तत्तत्र तेष्वनुशयिनां य इह लोके रमणीयं शोभनं चरणं शीलं येषां ते मणीयचरणा, रमणीयचरणेनोपलक्षितः शोभनोऽनुशयः पुण्यं कर्म येषां ते मणीयचरणा उच्यन्ते । क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानु- यसद्भावः । तेनानुशयेन पुण्येन कर्मणा चंद्रमंडले भुक्तशेषेणाभ्याशो ह क्षिप्र- व, यदिति क्रियाविशेषणं, ते रमणीयां क्रौर्यादिवर्जितां योनिमापद्येरन्प्राप्नुयुर्ब्रा-

ह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा स्वकर्मानुरूपेण । अथ पुनर्ये त परीताः कपूयचरणोपलक्षितकर्माणोऽशुभानुशया अभ्याशो ह यत्ते कपूयां र कर्म योनिमापद्येरन्कपूयामेव धर्मसंबंधवर्जितां जुगुप्सितां योनिमापद्येरन् श्व वा सूकरयोनिं वा चंडालयोनिं वा स्वकर्मानुरूपेणैव ॥

ये तु रमणीयचरणा द्विजातयस्ते स्वकर्मस्थाश्चेदिष्टादिकारिणस्ते धूम गत्या गच्छन्त्यागच्छन्ति च पुनः पुनर्घटीयंत्रवत् । विद्यां चेत्प्राप्नुयुस्तदाऽर्चि दिना गच्छन्ति, यदा तु न विद्यासेविनो नापि इष्टादिकर्म सेवन्ते तदा—

**अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूत भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपू तस्माज्जुगुप्सेत तदेष श्लोकः ॥८॥**

अथैतयोः पथोर्यथोक्तयोरर्चिर्धूमादिलक्षणयोः न कतरेणान्यतरेणचन यन्ति । तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि भवन्ति अत उभयमार्गपरिभ्रष्टा ह्यसकृज्जायन्ते म्रियन्ते चेत्यर्थः । तेषां जननमरण तेरनुकरणमिदमुच्यते । जायस्व म्रियस्वेतीश्वरनिमित्तचेष्टोच्यते । जननम लक्षणेनैव कालयापना भवति । न तु क्रियासु भोगेषु वा कालोऽस्तीत्यर्थ एतत्क्षुद्रजंतुलक्षणं तृतीयं पूर्वोक्तौ पंथानावपेक्ष्य स्थानं संसरताम् । येनैवं दा णमार्गगा अपि पुनरागच्छन्त्यनधिकृतानां ज्ञानकर्मणोरगमनमेव दक्षिणेन पथेति तेनासौ लोको न संपूर्यते । पंचमस्तु प्रश्नः पंचाग्निविद्यया व्याख्यातः । प्रथ दक्षिणोत्तरमार्गाभ्यामपाकृतः । दक्षिणोत्तरयोः पथोर्व्यावर्तनापि— मृतानाम प्रक्षेपः समानस्ततो व्यावर्त्यान्येऽर्चिरादिना यन्त्यन्ये धूमादिना पुनरुत्तरदा णायने षण्मासान्प्राप्नुवन्तः संयुज्य पुनर्व्यावर्तन्ते । अन्ये संवत्सरमन्ये मासेभ पितृलोकं— इति व्याख्याता । पुनरावृत्तिरपि क्षीणानुशयानां चंद्रमंडलादाक शादिक्रमेणोक्ता । अमुष्य लोकस्यापूरणं स्वशब्देनैवोक्तम्— तेनासौ लोको संपूर्यत इति । यस्मादेवं कष्टा संसारगतिस्तस्माज्जुगुप्सेत । यस्माच्च जन्ममर जनितवेदनानुभवकृतक्षणाः क्षुद्रजंतवो ध्वान्ते च घोरे दुस्तरे प्रवेशित सागर इवागाधेऽप्लवे निराशाश्चोत्तरणं प्रति, तस्माच्चैवंविधां संसारगतिं जुगुप्से बीभत्सेत घृणी भवेन्मा भूदेवंविधे संसारमहोदधौ घोरे पात इति । तदेतस्मिन्न एष श्लोकः पंचाग्निविद्यास्तुतये ॥

**स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पंचमश्चाचरंस्तैरिति ॥९॥**

स्तेनो हिरण्यस्य ब्राह्मणसुवर्णस्य हर्ता। सुरां पिबन्ब्राह्मणः सन्। गुरोश्च तल्पं दारानावसन्। ब्रह्महा ब्राह्मणस्य हन्ता च। इत्येते पतन्ति चत्वारः पंचमश्च तैः सह आचरन्निति॥

**अथ ह य एतानेवं पंचाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥१०॥ इति दशमः खंडः ॥**

अथ ह पुनर्यो यथोक्तान्पंचाग्नीन्वेद स तैरप्याचरन्महापातकिभिः सह न पाप्मना लिप्यते शुद्ध एव। तेन पंचाग्निदर्शनेन पावितो यस्मात्पूतः पुण्यो लोकः प्राजापत्यादिर्यस्य सोऽयं पुण्यलोको भवति, य एवं वेद यथोक्तं समस्तं पंचभिः प्रश्नैः पृष्टमर्थजातं वेद। द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था॥ इति दशमः खंडः॥　　　　५.१०.—

दक्षिणेन पथा गच्छतामन्नभाव उक्तः 'तद्देवानामन्नं' 'तं देवा भक्षयन्ति' इति, क्षुद्रजंतुलक्षणा च कष्टा संसारगतिरुक्ता। तदुभयदोषपरिजिहीर्षया वैश्वानरात्मभावप्रतिपत्त्यर्थमुत्तरो ग्रंथ आरभ्यते। 'अत्स्यन्नं पश्यसि प्रियं' इत्यादिलिंगात्। आख्यायिका तु सुखावबोधार्था विद्यासंप्रदानन्यायप्रदर्शनार्था च—

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिंद्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसां चक्रुः को न आत्मा किं ब्रह्मेति ॥१॥**

प्राचीनशाल इति नामत उपमन्योरपत्यमौपमन्यवः। सत्ययज्ञो नामतो पुलुषस्यापत्यं पौलुषिः। तथेंद्रद्युम्नो नामतो भल्लवेरपत्यं भाल्लविस्तस्यापत्यं भाल्लवेयः। जन इति नामतः शर्कराक्षस्यापत्यं शार्कराक्ष्यः। बुडिलो नामतः अश्वतराश्वस्यापत्यमाश्वतराश्विः। पंचापि ते हैते महाशाला महागृहस्था विस्तीर्णाभिः शालाभिर्युक्ताः संपन्ना इत्यर्थः। महाश्रोत्रियाः श्रुताध्ययनवृत्तसंपन्ना इत्यर्थः। त एवंभूताः सन्तः समेत्य संभूय क्वचिन्मीमांसां विचारणां चक्रुः कृतवन्त इत्यर्थः। कथम्। को नोऽस्माकमात्मा किं ब्रह्मेति। आत्मब्रह्मशब्द-

योरितरेतरविशेषणविशेष्यत्वम् । ब्रह्मेत्यध्यात्मपरिच्छिन्नमात्मानं नि
आत्मेति चात्मव्यतिरिक्तस्यादित्यादिब्रह्मण उपास्यत्वं निवर्तयति । अभेदे
ब्रह्म ब्रह्मैवात्मेत्येवं सर्वात्मा वैश्वानरो ब्रह्म स आत्मेत्येतत्सिद्धं भवति । 
व्यपतिष्यत् अंधोऽभविष्यत् इत्यादिलिंगात् ॥

**ते ह संपादयांचक्रुरुद्दालको वै भगवन्तोऽयमारुणिः संप्रतीमम
वैश्वानरमध्येति तं हंताभ्यागच्छामेति तं हाभ्याजग्मुः ॥२॥**

ते ह मीमांसन्तोऽपि निश्चयमलभमानाः संपादयांचक्रुः संपा
आत्मन उपदेष्टारम् । उद्दालको वै प्रसिद्धो नामतो, भगवन्तः पूजावन्तो
रुणिररुणस्यापत्यं संप्रति सम्यगिममात्मानं वैश्वानरमस्मदभिप्रेतमध्येति स्म
तं हंतेदानीमभ्यागच्छामेत्येवं निश्चित्य तं हाभ्याजग्मुः गतवन्तस्तमारुणिम

**स ह संपादयांचकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रो
स्तेभ्यो न सर्वमिव प्रतिपत्स्ये हंताहमन्यमभ्यनुशासानीति ॥३॥**

स ह तान्दृष्ट्वैव तेषामागमनप्रयोजनं बुद्ध्वा संपादयांचकार । व
प्रक्ष्यन्ति मां वैश्वानरमिमे महाशाला महाश्रोत्रियास्तेभ्योऽहं न सर्वमिव
प्रतिपत्स्ये वक्तुं नोत्सहे । अतो हंताहमिदानीमन्यमेषामभ्यनुशासानि
म्युपदेष्टारमिति ॥

**तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं
नरमध्येति तं हंताभ्यागच्छामेति तं हाभ्याजग्मुः ॥४॥**

एवं संधाय तान्होवाच । अश्वपतिर्वै नामतो भगवन्तोऽयं केकयस
कैकेयः संप्रति सम्यगिममात्मानं वैश्वानरमध्येतीत्यादि समानम् ॥

**तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार स ह प्रातः सं
उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्ना
स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋ
धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥५॥**

तेभ्यो ह राजा प्राप्तेभ्यः पृथक्पृथगर्हाण्यर्हणानि पुरोहितैर्भृत्यैश्च क
चकार कारितवान् । स हान्येद्यू राजा प्रातः संजिहान उवाच विनयेनोपगम
एतद्धनं मत्त उपादध्वमिति । तैः प्रत्याख्यातो मयि दोषं पश्यन्ति नूनं, य

ेगृह्णन्ति मत्तो धनमिति मन्वान आत्मनः सद्वृत्ततां प्रतिपिपादयिषन्नाह । न मम जनपदे स्तेनः परस्वहर्ता विद्यते । न कदर्योऽदाता सति विभवे । न ापो द्विजोत्तमः सन् । नानाहिताग्निः शतगुः । नाविद्वानधिकारानुरूपम् । न ी परदारेषु गन्ता । अत एव स्वैरिणी कुतो दुष्टचारिणी न संभवतीत्यर्थः । ़ न वयं धनेनार्थिन इत्युक्त आह अल्पं मत्वैते धनं न गृह्णन्तीति– यक्ष्यमाणो कतिभिरहोभिरहं हे भगवन्तोऽस्मि । तदर्थं क्लृप्तं धनं मया यावदेकैकस्मै ोक्तमृत्विजे धनं दास्यामि तावत्प्रत्येकं भगवद्भ्योऽपि दास्यामि । वसन्तु ावन्तः पश्यन्तु च मम यागम् ॥

**ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तं हैव वदेदात्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति ॥६॥**

इत्युक्तास्ते होचुः । येन हैवार्थेन प्रयोजनेन यं प्रति चरेद्गच्छेत्पुरुषस्तं ार्थं वदेत् । इदमेव प्रयोजनमागमनस्येत्ययं न्यायः सताम् । वयं च वैश्वान-ानार्थिनः । आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि सम्यग्जानासि । अतस्तमेव ऽस्मभ्यं ब्रूहि ॥

**तान्होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवैतदुवाच ॥७॥ इति एकादशः खंडः ॥**

इत्युक्तस्तान्होवाच । प्रातर्वो युष्मभ्यं प्रतिवक्तास्मि प्रतिवाक्यं दातास्मि । युक्तास्ते ह राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ता अपरेद्युः पूर्वाह्णे जानं प्रतिचक्रमिरे गतवन्तः । यत एवं महाशाला महाश्रोत्रिया ब्राह्मणाः सन्तो हाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थिनो नयेनोपजग्मुः । तथान्यैर्विद्योपादित्सुभिर्भवितव्यम् । तेभ्यश्चादाद्विद्यामनुपनीोपनयनमकृत्वैव तान् । यथा योग्येभ्यो विद्यामदात्तथान्येनापि विद्या दात-ेत्याख्यायिकार्थः । एतद्वैश्वानरविज्ञानमुवाचेति वक्ष्यमाणेन संबंधः ॥ ५.११.—

**औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति ावाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं सुतमासुतं कुले दृश्यते ॥१॥**

स कथमुवाचेत्याह— औपमन्यव हे कमात्मानं वैश्वानरं त्वमुपास्स इति प्रच्छ । नन्वयमन्याय आचार्यः सञ्शिष्यं पृच्छतीति । नैष दोषः । 'यद्वेत्थ तेन

मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति' न्यायदर्शनात् । अन्यत्राप्याचार्यस्याप्रा चति शिष्ये प्रतिभोत्पादनार्थः प्रश्नो दृष्टोऽजातशत्रोः, 'क्वैष तदाभूत्कुत गात्' इति । दिवमेव द्युलोकमेव वैश्वानरमुपासे भगवो राजन्निति होवाच वै सुतेजाः शोभनं तेजो यस्य सोऽयं सुतेजा इति प्रसिद्धो वैश्वानर आत्म रमनोऽवयवभूतत्वात् यं त्वमात्मानमात्मैकदेशमुपास्से तस्मात्सुतेजसो वै स्योपासनात्तव सुतमभिषुतं सोमरूपं कर्मणि प्रसुतं प्रकर्षेण च सुतमासुतं गणादिषु तव कुले दृश्यतेऽतीव कर्मिणस्त्वत्कुलीना इत्यर्थः ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच ले व्यपतिष्यद्यन्मां नागमिष्य इति ॥ इति द्वादशः खंडः ॥**

अत्स्यन्नं दीप्ताभिः सन्पश्यसि च पुत्रपौत्रादि प्रियमिष्टम् । अन्योऽप्य पश्यति च प्रियं भवत्यस्य सुतं प्रसुतमासुतमित्यादि कर्मित्वं ब्रह्मवर्चसं कु कश्चिदेतं यथोक्तमेवं वैश्वानरमुपास्ते । मूर्धा त्वात्मनो वैश्वानरस्यैष न र वैश्वानरः । अतः समस्तबुद्ध्या वैश्वानरस्योपासनान्मूर्धा शिरस्ते विपरीतग्र व्यपतिष्यद्विपतितमभविष्यत् यद्यदि मां नागमिष्यो नागतोऽभविष्यः । कार्षीर्यन्मामागतोऽसीत्यभिप्रायः ॥ इति द्वादशः खंडः ॥ ५.१

**अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमु इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वान त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥१॥**

अथ होवाच सत्ययज्ञं पौलुषिं— हे प्राचीनयोग्य कं त्वमात्मानमु इति । आदित्यमेव भगवो राजन्निति होवाच । शुक्लनीलादिरूपत्वाद्विश्वरूप दित्यस्य, सर्वरूपत्वाद्वा । सर्वाणि रूपाणि हि त्वाष्ट्राणि यतोऽतो वा वि आदित्यः । तदुपासनात्तव बहु विश्वरूपमिहामुत्रार्थमुपकरणं दृश्यते कुले

**प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं प प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते च त्तदात्मन इति होवाचांधोऽभविष्यो यन्मां नागमिष्य इति ॥२॥**

किंच त्वामनु प्रवृत्तोऽश्वतरीभ्यां युक्तो रथोऽश्वतरीरथो दासीनिष्को द भिर्युक्तो निष्को हारो दासीनिष्कः । अत्स्यन्नमित्यादि समानम् । चक्षुर्वैश्वा

सविता। तस्य समस्तबुद्ध्योपासनादंधोऽभविष्यः चक्षुर्हीनोऽभविष्यो यन्मां
ागमिष्य इति पूर्ववत् ॥ इति त्रयोदशः खंडः ॥ ५.१३.—

**अथ होवाचेंद्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति
युमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमा-
ानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥१॥**

अथ होवाचेंद्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यादि
ानम्। पृथग्वर्त्मा नाना वर्त्मानि यस्य वायोः आवहोद्वहादिभिर्भेदैर्वर्तमानस्य
ऽयं पृथग्वर्त्मा वायुः। तस्मात्पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात्पृथङ्नाना-
कास्त्वां बलयो वस्त्रान्नादिलक्षणा बलय आयन्त्यागच्छन्ति। पृथग्रथश्रेणयो
पंक्तयोऽपि त्वामनुयन्ति ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले
एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त
्क्रमिष्यद्यन्मां नागमिष्य इति ॥२॥ इति चतुर्दशः खंडः ॥**

अत्स्यन्नमित्यादि समानम्। प्राणस्त्वेष आत्मन इति होवाच। प्राणस्ते
ोदक्रमिष्यदुत्क्रान्तोऽभविष्यद्यन्मां नागमिष्य इति ॥ ५.१४.—

**अथ होवाच जनं शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव
गवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से
स्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥१॥**

अथ होवाच जनमित्यादि समानम्। एष वै बहुल आत्मा वैश्वानरः।
ुलत्वमाकाशस्य सर्वगतत्वाद्बहुलगुणोपासनाच्च। त्वं बहुलोऽसि प्रजया च पुत्र-
त्रादिलक्षणया धनेन च हिरण्यादिना ॥

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले
एतमेवमात्मानं वैश्वानरमुपास्ते संदेहस्त्वेष आत्मन इति होवाच संदेहस्ते
्शीर्यद्यन्मां नागमिष्य इति ॥२॥ इति पंचदशः खंडः ॥**

संदेहस्त्वेष संदेहो मध्यमं शरीरं वैश्वानरस्य। दिहेरुपचयार्थत्वान्मांस-
धरास्थ्यादिभिश्च बहुलं शरीरं तत्संदेहस्ते तव शरीरं व्यशीर्यच्छीर्णमभविष्य-
न्मां नागमिष्य इति ॥ इति पंचदशः खंडः ॥ ५.१५.—

**अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स**

इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वम नमुपास्से तस्मात्त्वं रयिमान्पुष्टिमानसि ॥१॥

अथ होवाच बुडिलमाश्वतराश्विमित्यादि समानम् । एष वै रयि वैश्वानरो धनरूपः । अद्भ्योऽन्नं ततो धनमिति । तस्माद्रयिमान्धनवांस्त्वं मांश्च शारीरेण पुष्टश्चान्ननिमित्तत्वात् ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच ब स्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥२॥ इति षोडशः खंडः ॥

बस्तिस्त्वेष आत्मनो वैश्वानरस्य. बस्तिर्मूत्रसंग्रहस्थानं, बस्तिस्ते व्यभ ङ्भिन्नोऽभविष्यद्यन्मां नागमिष्य इति ॥ इति षोडशः खंडः॥ ५.१६

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति । वीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्म मुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥१॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच । ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ इति सप्तदशः खंडः ॥

अथ होवाचोद्दालकमित्यादि समानम् । पृथिवीमेव भगवो राजा होवाच । एष वै प्रतिष्ठा पादौ वैश्वानरस्य । पादौ ते व्यम्लास्येतां विम्ल अभविष्यतां श्लथीभूतौ यन्मां नागमिष्य इति ॥ ५.१७

तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसो मत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स स लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥१॥

तान्यथोक्तवैश्वानरदर्शनवतो होवाच— एते यूयं, वै खल्वित्यनर्थकौ, पृथगिवापृथक्सन्तमिममेकं वैश्वानरमात्मानं विद्वांसोऽन्नमत्थ परिच्छिन्नात्मबु ल्येतत् हस्तिदर्शन इव जात्यंधाः । यस्त्वेतमेवं यथोक्तावयवैर्द्युमूर्धादिभिः पृथि पादान्तैर्विशिष्टमेकं प्रादेशमात्रं प्रादेशैर्द्युमूर्धादिभिः पृथिवीपादान्तैरध्यात्मं मं ज्ञायत इति प्रादेशमात्रम् । मुखादिषु वा करणेष्वत्तृत्वेन मीयत इति प्रा मात्रः । द्युलोकादिपृथिव्यंतप्रदेशपरिमाणो वा प्रादेशमात्रः । प्रकर्षेण शास्त्रे

न्त इति प्रादेशा द्युलोकादय एव तावत्परिमाणः प्रादेशमात्रः । शाखान्तरे र्धादिश्चिबुकप्रतिष्ठ इति प्रादेशमात्रं कल्पयन्ति । इह तु न तथाभिप्रेतः । ह वा एतस्यात्मनः इत्याद्युपसंहारात् । प्रत्यगात्मतया अभिविमीयतेऽह- ज्ञायत इत्यभिविमानस्तमेतमात्मानं वैश्वानरं, विश्वान्नरान्नयति पुण्यपापानु- गतिं सर्वात्मैष ईश्वरो वैश्वानरो, विश्वो नर एव वा सर्वात्मत्वात् । विश्वैर्वा प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरस्तमेवमुपास्ते यः, सोऽद- दी सर्वेषु लोकेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु शरीरें- मनोबुद्धिषु, तेषु ह्यात्मकल्पनाव्यपदेशः, प्राणिनामन्नमत्ति । वैश्वानरवि- त्मा सन्नन्नमत्ति । न यथाऽज्ञः पिंडमात्राभिमानः सन्नित्यर्थः ॥

**तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः : पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः**

**इति अष्टादशः खंडः ॥**

कस्मादेवम् । यस्मात्तस्य ह वै प्रकृतस्यैवैतस्यात्मनो वैश्वानरस्य मूर्धैव ाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव । अथवा विध्यर्थमेतद्वचनं एवमुपास्य इति । अथेदानीं वैश्वानरविदो नेऽग्निहोत्रं संपिपादयिषन्नाह— एतस्य वैश्वानरस्य भोक्तुरुर एव वेदिराकार- न्यात् । लोमानि बर्हिर्वेद्यामिवोरसि लोमान्यास्तीर्णानि दृश्यन्ते । हृदयं त्यो हृदयाद्धि मनः प्रणीतमिवानंतरी भवति । अतोऽन्वाहार्यपचनोऽग्नि- । आस्यं मुखमाहवनीय इवाहवनीयो हूयतेऽस्मिन्नन्नमिति ॥ ५.१८.—

**तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहु- ाणाय स्वाहेति प्राणस्तृप्यति ॥१॥**

तत्तत्रैवं सति यद्भक्तं प्रथमं भोजनकाल आगच्छेद्भोजनार्थं तद्धोमीयं ाव्यं, अग्निहोत्रसंपन्मात्रस्य विवक्षितत्वान्नाग्निहोत्रांगेतिकर्तव्यताप्राप्तिरिह । क्ता यां प्रथमामाहुतिं जुहुयात्तां कथं जुहुयादित्याह— प्राणाय स्वाहेत्य- ंत्रेण । आहुतिशब्दादवदानप्रमाणमन्नं प्रक्षिपेदित्यर्थः । तेन प्राणस्तृप्यति ॥

**प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति ृप्यति दिवि तृप्यन्त्यां यत्किंच द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति**

तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेने
इति एकोनविंशः खंडः ॥

प्राणे तृप्यति चक्षुस्तृप्यति, चक्षुरादित्यो द्यौश्चेत्यादि तृप्यति, य
द्यौश्चादित्यश्च स्वामित्वेनाधितिष्ठतस्तच्च तृप्यति, तस्य तृप्तिमनु स्वयं
तृप्यत्येवं प्रत्यक्षम् । किं च प्रजादिभिश्च । तेजः शरीरस्था दीप्तिः
प्रागल्भ्यं वा, ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः ॥

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्या
॥१॥ व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चंद्रमास्तृप्यति
तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किंच दिशश्च चंद्रमाश्चा
तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा
सेनेति ॥२॥ इति विंशः खंडः ॥

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्य
अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति
तृप्यति पृथिव्यां तृप्यन्त्यां यत्किंच पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृ
स्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेने
इति एकविंशः खंडः ॥

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समा
॥१॥ समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति
तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किंच विद्युच्च पर्जन्यश्चा
स्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्र
नेति ॥२॥ इति द्वाविंशः खंडः ॥

अथ यां पंचमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्य
उदाने तृप्यति त्वक्तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृ
शस्तृप्यत्याकाशे तृप्यति यत्किंच वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति
तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

अथ यां द्वितीयां तृतीयां चतुर्थीं पंचमीमिति समानम् ॥

स य इदमविद्वानग्निहोत्रं जुहोति यथांगारानपोह्य भस्मनि
हुत्तत्स्यात् ॥१॥

स यः कश्चिदिदं वैश्वानरदर्शनं यथोक्तमविद्वान्सन्नग्निहोत्रं प्रसिद्धं जुहोति, रानाहुतियोग्यानपोह्य अनाहुतिस्थाने भस्मनि जुहुयात्तादृक्तुल्यं तस्य ोत्रहवनं स्याद्वैश्वानरविदोऽग्निहोत्रमपेक्ष्येति प्रसिद्धाग्निहोत्रनिंदया वैश्वानर-ग्निहोत्रं स्तूयते ॥

**अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु त्मसु हुतं भवति ॥२॥**

अतश्चैतद्विशिष्टमग्निहोत्रम् । कथम् । अथ य एतदेवं विद्वानग्निहोत्रं जुहोति ाथोक्तवैश्वानरविज्ञानवतः सर्वेषु लोकेष्वित्याद्युक्तार्थम् । हुतमन्नमत्तीत्यन-र्थत्वात् ॥

**तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते य विद्वानग्निहोत्रं जुहोति ॥३॥**

किंच तद्यथेषीकायास्तूलमग्रमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत प्रदह्येत क्षिप्रं एवं विदुषः सर्वात्मभूतस्य सर्वान्नानामत्तुः सर्वे निरवशिष्टाः पाप्मानो धर्मा ा अनेकजन्मसंचिता इह च प्राग्ज्ञानोत्पत्तेर्ज्ञानसहभाविनश्च प्रदूयन्ते प्रद-र्ःमानशरीरारंभकपाप्मवर्जं, लक्ष्यं प्रति मुक्तेषुवत्प्रवृत्तफलत्वात्तस्य न य एतदेवं विद्वानग्निहोत्रं जुहोति भुंक्ते ॥

**तस्मादु हैवंविद्यद्यपि चंडालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वै-हुतं स्यादिति तदेष श्लोकः ॥४॥**

स यद्यपि चंडालायोच्छिष्टानर्हायोच्छिष्टं प्रयच्छेदुच्छिष्टं दद्यात्प्रतिषिद्धमु-ानं यद्यपि कुर्यात् आत्मनि हैवास्य चंडालदेहस्थे वैश्वानरे तद्धुतं स्यान्ना-मित्तमिति विद्यामेव स्तौति । तदेतस्मिन्स्तुत्यर्थे श्लोको मंत्रोऽप्येष भवति ॥

**यथेह क्षुधिता बाला मातरं पर्युपासत एवं सर्वाणि भूतान्यग्निहोत्र-त इत्यग्निहोत्रमुपासत इति॥५॥ इति चतुर्विंशः खंडः ॥**

**इति पंचमोऽध्यायः समाप्तः ॥**

यथेह लोके क्षुधिता बुभुक्षिता बाला मातरं पर्युपासते, कदा नो माताऽन्नं तीति एवं सर्वाणि भूतान्यन्नादान्येवंविदोऽग्निहोत्रं भोजनमुपासते कदा भोक्ष्यत इति, जगत्सर्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः । द्विरुक्तिरध्यायप-प्त्यर्था ॥ इति पंचमोऽध्यायः ॥ ५.२४.—

## ॥ षष्ठोऽध्यायः ॥

श्वेतकेतुर्हारुणेय आसेत्याद्यध्यायसंबंधः । 'सर्वं खल्विदं ब्रह्म तज्ज
इत्युक्तं, कथं तस्माज्जगदिदं जायते तस्मिन्नेव च लीयतेऽनिति च तेनै
क्तव्यम् । अनंतरं चैकस्मिन्भुक्ते विदुषि सर्वं जगत्तृप्तं भवतीत्युक्तं,
सत्यात्मनः सर्वभूतस्थस्योपपद्यते नात्मभेदे । कथं च तदेकत्वमिति त
षष्ठोऽध्याय आरभ्यते । पितापुत्राख्यायिका विद्यायाः सारिष्ठत्वप्रदर्शना

**ॐ । श्वेतकेतुर्हारुणेय आस तं ह पितोवाच श्वेतकेतो वस ब्रह्म वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबंधुरिव भवतीति ॥१॥**

श्वेतकेतुरिति नामतो, हेत्यैतिह्यार्थः, आरुणेयोऽरुणस्य पौत्र आस
तं पुत्रं ह्यारुणिः पिता योग्यं विद्याभाजनं मन्वानस्तस्योपनयनकालात्ययं
न्नुवाच–हे श्वेतकेतोऽनुरूपं गुरुं कुलस्य नो गत्वा वस ब्रह्मचर्यम् । न
यदस्मत्कुलीनो हे सोम्याननूच्यानधीत्य ब्रह्मबंधुरिव भवतीति ब्राह्मणान्बं
दिशति न स्वयं ब्राह्मणवृत्त इति तस्यातः प्रवासोऽनुमीयते पितुः येन
गुणवान्सन्पुत्रं नोपनेष्यति ॥

**स ह द्वादशवर्ष उपेत्य चतुर्विंशतिवर्षः सर्वान्वेदानधीत्य म अनूचानमानी स्तब्ध एयाय तं ह पितोवाच ॥२॥**

स पित्रोक्तः श्वेतकेतुर्ह द्वादशवर्षः सन्नुपेत्याचार्यं यावच्चतुर्विं
बभूव तावत्सर्वान्वेदांश्चतुरोऽप्यधीत्य तदर्थं च बुद्ध्वा, महामना महद्गंभी
यस्यासममात्मानमन्यैर्मन्यमानं मनो यस्य सोऽयं महामना, अनूचानमा
नमात्मानं मन्यत इत्येवंशीलो यः सोऽनूचानमानी स्तब्धोऽप्रणतस्वभाव
गृहम् । तमेवंभूतं ह्यात्मनोऽननुरूपशीलं स्तब्धं मानिनं पुत्रं दृष्ट्वा पि
सद्धर्मावताराचिकीर्षया ॥

**श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत देशमप्राक्ष्यः येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति भगवः स आदेशो भवतीति ॥३॥**

श्वेतकेतो यन्नु इदं महामना अनूचानमानी स्तब्धश्चासि कस्तेऽ
प्राप्त उपाध्यायादुतापि तमादेशमादिश्यत इत्यादेशः केवलशास्त्राचार्योपदे
मित्येतद्येन वा परं ब्रह्मादिश्यते स आदेशः तमप्राक्ष्यः पृष्टवानस्याच

दशं विशिनष्टि येनादेशेन श्रुतेनाश्रुतमप्यन्यत् श्रुतं भवत्यमतं मतमतर्कितं तं भवत्यविज्ञातं विज्ञातमनिश्चितं निश्चितं भवतीति । सर्वानपि वेदानधीत्य चान्यद्वेद्यमधिगम्याप्यकृतार्थ एव भवति यावदात्मतत्त्वं न जानातीत्या- यिकातोऽवगम्यते । तदेतदद्भुतं श्रुत्वाह, कथं न्वेतदप्रसिद्धमन्यविज्ञाने- ाद्विज्ञातं भवतीत्येवं मन्वानः पृच्छति, कथं नु केन प्रकारेण हे भगवः स शो भवतीति ॥

**यथा सोम्यैकेन मृत्पिंडेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारंभणं विकारो धेयं मृत्तिकेत्येव सत्यम् ॥४॥**

यथा स आदेशो भवति तच्छृणु हे सोम्य । यथा लोके एकेन मृत्पिं- रुचककुंभादिकारणभूतेन विज्ञातेन सर्वमन्यत्तद्विकारजातं मृन्मयं मृद्विकार- विज्ञातं स्यात् । कथं मृत्पिंडे कारणे विज्ञाते कार्यमन्यद्विज्ञातं स्यात् । नैष : । कारणेनानन्यत्वात्कार्यस्य । यन्मन्यसेऽन्यस्मिन्विज्ञातेऽन्यन्न ज्ञायत इति । मेवं स्यात् । यद्यन्यत्कारणात्कार्यं स्यान्नत्वेवमन्यत्कारणात्कार्यम् । कथं ई लोक, इदं कारणमयमस्य विकार इति । शृणु । वाचारंभणं वागारंभणं ालंबनमित्येतत् । कोऽसौ, विकारो नामधेयं, नामैव नामधेयं, स्वार्थे धेय- यः । वागालंबनमात्रं नामैव केवलं न विकारो नाम वस्त्वस्ति, परमार्थतो किेत्येव मृत्तिकैव तु सत्यं वस्त्वस्ति ॥

**यथा सौम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारंभणं ारो नामधेयं लोहमित्येव सत्यम् ॥५॥**

यथा सोम्यैकेन लोहमणिना सुवर्णपिंडेन सर्वमन्यद्विकारजातं कटकमुकुट- ादि विज्ञातं स्यात् । वाचारंभणमित्यादि समानम् ॥

**यथा सोम्यैकेन नखनिकृंतनेन सर्वं कार्ष्णायसं विज्ञातं स्याद्वा- भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवं सोम्य स आदेशो तीति ॥६॥**

यथा सोम्यैकेन नखनिकृंतनेनोपलक्षितेन कृष्णायसपिंडेनेत्यर्थः, सर्वं र्णायसं कृष्णायसविकारजातं विज्ञातं स्यात् । समानमन्यत् । अनेकदृष्टान्तो- ानं दार्ष्टान्तिकानेकभेदानुगमार्थं दृढप्रतीत्यर्थं च । एवं सोम्य स आदेशो यो क्तो भवति ॥

सत्यमेवं स्याद्यदि त्वदिच्छातंत्रा श्रुतिः स्यात् स्वतंत्रा तु श्रुतिः यत आह उ
ह्येव बीजं नांडादीति । दृश्यते चांडजाद्यभावे तज्जातीयसंतत्यभावो नांडाद्य
अतोऽडजादीन्येव बीजान्यंडजादीनाम् । तथा जीवाज्जातं जीवजं जरायुज
नरपुरुषपश्वादि । उद्भिज्जं उद्भिनत्तीत्युद्भित्स्थावरं ततो जातमुद्भिज्जं,
वोद्भित्ततो जायत इत्युद्भिज्जं स्थावरबीजं स्थावराणां बीजमित्यर्थः । स्वे
शोकजयोरंडजोद्भिज्जयोरेव यथासंभवमंतर्भावः । एवं ह्यवधारणं त्रीण्येव
नीत्युपपन्नं भवति ॥

**सेयं देवतैक्षत हंताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्र नामरूपे व्याकरवाणीति ॥२॥**

सेयं प्रकृता सदाख्या तेजोबन्नयोनिर्देवतोक्ता ऐक्षतेक्षितवती यथापूः
स्यामिति । तदेव बहुभवनं प्रयोजनं नाद्यापि निर्वृत्तं इत्यत ईक्षां पुनः कृ
बहुभवनमेव प्रयोजनमुररीकृत्य । कथम् । हंतेदानीमहमिमा यथोक्तास्तेजः
स्तिस्रो देवता अनेन जीवेनेति स्वबुद्धिस्थं पूर्वसृष्ट्यनुभूतप्राणधारणं आत्म
स्मरन्त्याह अनेन जीवेनात्मनेति । प्राणधारणकर्त्रात्मनेति वचनात्स्वात्मने
तिरिक्तेन चैतन्यस्वरूपतया अविशिष्टेनेत्येतद्दर्शयति । अनुप्रविश्य तेजोबन्नभू
त्रासंसर्गेण लब्धविशेषविज्ञाना सती नाम च रूपं च नामरूपे व्याकरवाणि
स्पष्टमाकरवाणि असौनामायं इदंरूप इति व्याकुर्यामित्यर्थः ॥

ननु न युक्तमिदं असंसारिण्याः सर्वज्ञाया देवताया बुद्धिपूर्वकमनेक
सहस्रानर्थाश्रयं देहमनुप्रविश्य दुःखमनुभविष्यामीति संकल्पनं, अनुप्रवेशश्च,
तंत्र्ये सति । सत्यमेवं न युक्तं स्यात् यदि स्वेनैवाविकृतेन रूपेणानुप्रा
दुःखमनुभवेयमिति च संकल्पितवती । न त्वेवम् । कथं तर्हि । अनेन
नात्मनानुप्रविश्येति वचनात् । जीवो हि नाम देवताया आभासमात्र
बुद्ध्यादिभूतमात्रासंसर्गजनितः, आदर्शे इव प्रविष्टः पुरुषप्रतिबिंबो जलादि
च सूर्यादीनाम् । अचिंत्यानंतशक्तिमत्या देवताया बुद्ध्यादिसंबंधश्चैतन्या
देवतास्वरूपाविवेकाग्रहणनिमित्तः सुखी दुःखी मूढ इत्याद्यनेकविकल्पप्रत्ययहे
छायामात्रेण जीवरूपेणानुप्रविष्टत्वाद्देवता न दैहिकैः स्वतः सुखदुःखादि
संबध्यते । यथा पुरुषादित्यादय आदर्शोदकादिषु च्छायामात्रेणानुप्रविष्टा आद
द्कादिदोषैर्न संबध्यन्ते, तद्वद्देवतापि । 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लि

ुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः' ॥ काशवत्सर्वगतश्च नित्यः' इति हि काठके । 'ध्यायतीव लेलायतीव' इति च ासनेयके । ननु च्छायामात्रश्चेज्जीवो मृषैव प्राप्तः तथा परलोकेहलोकादि च । । नैष दोषः । सदात्मना सत्यत्वाभ्युपगमात् । सर्वं च नामरूपादि सदा-ाव सत्यं विकारजातं, स्वतस्त्वनृतमेव । 'वाचारंभणं विकारो नामधेयं' ुक्तत्वात् । तथा जीवोऽपीति । यक्षानुरूपो हि बलिरिति न्यायप्रसिद्धिः । ः सदात्मना सर्वव्यवहाराणां सर्वविकाराणां च सत्यत्वं सतोऽन्यत्वे चानृतत्व-ते न कश्चिद्दोषः तार्किकैरिहानुवक्तुं शक्यः । यथेतरेतरविरुद्धद्वैतवादाः स्वबु-विकल्पमात्रा अतत्त्वनिष्ठा इति शक्यं वक्तुम् ॥

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता नेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् ॥३॥**

सैवं तिस्रो देवता अनुप्रविश्य स्वात्मावस्थे बीजभूते अव्याकृते नामरूपे ाकरवाणीतीक्षित्वा तासां च तिसृणां देवतानामेकैकां त्रिवृतं त्रिवृतं करवाणि । ैकस्यास्त्रिवृत्करण एकैकस्याः प्राधान्यं द्वयोर्द्वयोर्गुणभावः, अन्यथा हि रज्ज्वा ेकमेव त्रिवृत्करणं स्यात् । न तु तिसृणां पृथक्पृथक्त्रिवृत्करणमिति । एवं हि जोबन्नानां पृथङ्नामप्रत्ययलाभः स्यात् तेज इदं इमा आपोऽन्नमिदमिति च । ति च पृथङ्नामप्रत्ययलाभे देवतानां सम्यग्व्यवहारस्य प्रसिद्धिः प्रयोजनं ात् । एवमीक्षित्वा सेयं देवतेमास्तिस्रो देवता अनेनैव यथोक्तेनैव जीवेन सूर्य-ंबवदंतः प्रविश्य वैराजं पिंडं प्रथमं देवादीनां च पिंडाननुप्रविश्य यथासंकल्पमेव ामरूपे व्याकरोत् असौनामायं इदंरूप इति ॥

**तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सोम्येमास्तिस्रो ेवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥४॥ इति तृतीयः खंडः ॥**

तासां च देवतानां गुणप्रधानभावेन त्रिवृतं त्रिवृतमेकैकामकरोत्कृतवती ेवता । तिष्ठतु तावद्देवतादिपिंडानां नामरूपाभ्यां व्याकृतानां तेजोबन्नमयत्वेन ्रेधात्वं यथा तु बहिरिमाः पिंडेभ्यस्तिस्रो देवताः त्रिवृत्त्रिवृदेकैका भवति तन्मे ्म निगदतो विजानीहि विस्पष्टमवधारयोदाहरणतः ॥ ६.३.—

**यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापा-ादग्नेरग्नित्वं वाचारंभणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥१॥**

यत्तद्देवतानां त्रिवृत्करणमुक्तं तस्यैवोदाहरणमुच्यते । उदाहरणं नाम ए
देशप्रसिद्ध्या अशेषप्रसिद्ध्यर्थमुदाह्रियत इति । तदेतदाह— यदग्नेस्त्रिवृत्कृत
रोहितं रूपं प्रसिद्धं लोके तदग्निवृत्कृतस्य तेजसो रूपमिति विद्धि । तथा यच्छ
रूपमग्नेरेव तदपामत्रिवृत्कृतानां यत्कृष्णं तस्यैवाग्ने रूपं तदन्नस्य पृथिव्या अ
वृत्कृताया इति विद्धि । तत्रैवं सति रूपत्रयव्यतिरेकेणाग्निरिति यन्मन्यसे
त्तस्याग्नेरग्नित्वमिदानीमपागादपगतम् । प्राग्रूपत्रयविवेकविज्ञानात् या अग्निबु
रासीत्ते साग्निबुद्धिरपगताग्निशब्दश्चेत्यर्थः । यथा दृश्यमानरक्तोपधानसंयु
स्फटिको गृह्यमाणः पद्मरागोऽयमितिशब्दबुद्ध्योः प्रयोजको भवति प्रागुपधान
टिकयोर्विवेकविज्ञानात् तद्विवेकविज्ञाने तु पद्मरागशब्दबुद्धी निवर्तेते तद्विवेकविज्ञ
त्तद्वत् । ननु किमत्र बुद्धिशब्दकल्पनया क्रियते प्राग्रूपत्रयविवेककरणाद
रेवासीत्तदग्नेरग्नित्वं रोहितादिरूपविवेककरणात् अपागादिति युक्तं, यथा तंत
कर्षणे पटाभावः । नैवं, बुद्धिशब्दमात्रमेव ह्यग्निः, यत आह वाचारंभणमग्नि
विकारो नामधेयं नाममात्रमित्यर्थः । अतोऽग्निबुद्धिरपि मृषैव । किं तर्हि
सत्यं, त्रीणि रूपाणीत्येव सत्यं, नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्ती
वधारणार्थः ॥

**यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तद
स्यापागादादित्यादादित्यत्वं वाचारंभणं विकारो नामधेयं त्रीणि रूपाणी
सत्यम् ॥२॥ यच्चंद्रमसो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृ
तदन्नस्यापागाच्चंद्राच्चंद्रत्वं वाचारंभणं विकारो नामधेयं त्रीणि रूपाणी
सत्यम् ॥३॥ यद्विद्युतो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृ
तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारंभणं विकारो नामधेयं त्रीणि रूपा
ण्येव सत्यम् ॥४॥**

तथा यदादित्यस्य यच्चंद्रमसो यद्विद्युत इत्यादि समानम् । ननु 'यथ
खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि' इत्युप
तेजस एव चतुर्भिरप्युदाहरणैः अग्न्यादिभिस्त्रिवृत्करणं दर्शितं नाबन्नयोरुदाह
दर्शितं त्रिवृत्करणे । नैष दोषः । अबन्नविषयाण्यप्युदाहरणानि एवमेव च ऊ
ह्यानीति मन्यते श्रुतिः । तेजस उदाहरणमुपलक्षणार्थम् । रूपवत्त्वात्स्पष्टार्थत्वो
पपत्तेश्च । गंधरसयोरनुदाहरणं त्रयाणामसंभवात् । न हि गंधरसौ तेजसि स्त

ाब्दयोरनुदाहरणं विभागेन दर्शयितुमशक्यत्वात् । यदि सर्वं जगत्त्रिवृत्कृत-
न्यादिवत् त्रीणि रूपाणीत्येव सत्यं अग्नेरग्नित्ववदपागाज्जगतो जगत्त्वम् ।
अन्नस्याप्यप्शुंगत्वादाप इत्येव सत्यं वाचारंभणमात्रमन्नम् । तथा अपामपि
शुंगत्वाद्वाचारंभणत्वं तेज इत्येव सत्यम् । तेजसोऽपि सच्छुंगत्वाद्वाचारंभणत्वं
त्येव सत्यमित्येषोऽर्थो विवक्षितः । ननु वाय्वंतरिक्षे त्वत्रिवृत्कृते तेजःप्रभृति-
तर्भूतत्वादवशिष्येते । एवं गंधरसशब्दस्पर्शाश्चावशिष्टा इति कथं सता
तेन सर्वमन्यदविज्ञातं विज्ञातं भवेत् । तद्विज्ञाने वा प्रकारान्तरं वाच्यम् ।
दोषः । रूपवद्द्रव्ये सर्वस्य दर्शनात् । कथम् । तेजसि तावद्रूपवति शब्द-
योरप्युपलंभाद्वाय्वंतरिक्षयोस्तत्र स्पर्शशब्दगुणवतोः सद्भावोऽनुमीयते । तथा
नयो रूपवतो रसगंधांतर्भाव इति । रूपवतां त्रयाणां तेजोबन्नानां त्रिवृत्क-
ादर्शनेन सर्वं तदंतर्भूतं सद्विकारत्वात् त्रीण्येव रूपाणि विज्ञातं मन्यते श्रुतिः ।
इ मूर्तं रूपवद्द्रव्यं प्रत्याख्याय वाय्वाकाशयोः तद्गुणयोर्गंधरसयोर्वा ग्रहण-
त । अथवा रूपवतामपि त्रिवृत्करणं प्रदर्शनार्थमेव मन्यते श्रुतिः । यथा तु
त्कृते त्रीणि रूपाणीत्येव सत्यं, तथा पंचीकरणेऽपि समानो न्याय इत्यतः
स्य सद्विकारत्वात्सता विज्ञातेन सर्वमिदं विज्ञातं स्यात्सदेकमेवाद्वितीयं
ामिति सिद्धमेव भवति । तदेकस्मिन्सति विज्ञाते सर्वमिदं विज्ञातं भवतीति
नम् ॥

**एतद्ध स्म वै तद्विद्वांस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदांचक्रुः ॥५॥**

एतद्विद्वांसो विदितवन्तः पूर्वेऽतिक्रान्ता महाशाला महाश्रोत्रिया आहुर्ह
वै किल । किमुक्तवन्त इत्याह— न नोऽस्माकं कुलेऽद्येदानीं यथोक्तविज्ञान-
ां कश्चन कश्चिदपि अश्रुतममतमविज्ञातं उदाहरिष्यति नोदाहरिष्यति, सर्वं
ज्ञातमेवास्मत्कुलीनानां सद्विज्ञानवत्त्वादित्यभिप्रायः । ते पुनः कथं सर्वं विज्ञा-
न्त इत्याह—एभ्यस्त्रिभ्यो रोहितादिरूपेभ्यः त्रिवृत्कृतेभ्यो विज्ञातेभ्यः सर्व-
प्यन्यच्छिष्टमेवमेवेति विदांचक्रुर्विज्ञातवन्तो यस्मात्तस्मात्सर्वज्ञा एव सद्विज्ञानात्त
ासुरित्यर्थः । अथवैभ्यो विदांचक्रुरिति अग्न्यादिभ्यो दृष्टान्तेभ्यो विज्ञातेभ्यः
वमन्यद्विदांचक्रुरित्येतत् ॥

**यद्‌ रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदांचक्रुर्यद्‌ शुक्लमिवा-**

**भूदित्यपां रूपमिति तद्विदांचक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदांचक्रुः ॥६॥ यद्वविज्ञातमिवाभूदित्येतासामेव देवतानां समास इति तद्विदांचक्रुर्यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥७॥ इति चतुर्थः खंडः ॥**

कथम् । यदन्यद्रूपेण संदिह्यमाने कपोतादिरूपे रोहितमिव यद्गृह्यमाणमभूत्तेषां पूर्वेषां ब्रह्मविदां, तत्तेजसो रूपमिति विदांचक्रुः । तथा यच्छुक्लमिवाभूद्गृह्यमाणं तदपां रूपं, यत्कृष्णमिव गृह्यमाणं तदन्नस्येति विदांचक्रुः । एवमेवात्यन्तदुर्लक्ष्यं यदु अप्यविज्ञातमिव विशेषतोऽगृह्यमाणमभूत् तदप्येतासामेव तिसृणां देवतानां समासः समुदाय इति विदांचक्रुः । एवं तावद्बाह्यं वस्त्वग्न्यादिवद्विज्ञातं तथेदानीं यथा नु खलु हे सोम्येमा यथोक्तास्तिस्रो देवताः पुरुषं शिरःपाण्यादिलक्षणं कार्यकारणसंघातं प्राप्य पुरुषेणोपयुज्यमानाः त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि निगदतः इत्युक्त्वाह ॥ इति चतुर्थः खंडः॥ ६.४.—

**अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योऽणिष्ठस्तन्मनः ॥१॥**

अन्नमशितं भुक्तं त्रेधा विधीयते जाठरेणाग्निना पच्यमानं त्रिधा विभज्यते । कथं, तस्यान्नस्य त्रिधा विधीयमानस्य यः स्थविष्ठः स्थूलतमो धातुः स्थूलतमं वस्तु विभक्तस्य स्थूलोंऽशः तत्पुरीषं भवति । यो मध्यमोंऽशो धातुरन्नस्य तद्रसादिक्रमेण परिणम्य मांसं भवति, योऽणिष्ठोऽणुतमो धातुः स ऊर्ध्वं हृदयं प्राप्य सूक्ष्मासु हिताख्यासु नाडीष्वनुप्रविश्य वागादिकरणसंघातस्य स्थितिमुत्पादयन्मनो भवति । मनोरूपेण विपरिणमन्मनस उपचयं करोति । ततश्चान्नोपचितत्वान्मनसो भौतिकत्वमेव न वैशेषिकतंत्रोक्तलक्षणं नित्यं निरवयवं चेति गृह्यते । यदपि मनोऽस्य दैवं चक्षुरिति वक्ष्यति तदपि न नित्यत्वापेक्षया, किं तर्हि सूक्ष्मव्यवहितविप्रकृष्टादिसर्वेंद्रियविषयव्यापारकत्वापेक्षया । यच्चान्येंद्रियविषयापेक्षया नित्यत्वं तदप्यापेक्षिकमेवेति वक्ष्यामः । 'सदेकमेवाद्वितीयं' इति श्रुतेः ॥

**आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः ॥२॥**

तथा आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं

लम् । अतो विशिष्टः स एष संकल्पः । अतः संकल्पमुपास्स्व इत्युक्त्वा फल-
माह तदुपासकस्य ॥

स यः संकल्पं ब्रह्मेत्युपास्ते संक्लृप्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रति-
ष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावत्संकल्पस्य गतं
तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः संकल्पा-
द्भूय इति संकल्पाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥३॥ इति
चतुर्थः खंडः ॥

स यः संकल्पं ब्रह्मेति ब्रह्मबुद्ध्योपास्ते संक्लृप्तान्वै धात्रा अस्येमे लोकाः
फलमिति कल्पितान्समर्थितान्संकल्पितान्स विद्वान्ध्रुवान्नित्यान्, अत्यंताध्रुवापेक्षया,
ध्रुवश्च स्वयम् । लोकिनो ह्यध्रुवत्वे लोके ध्रुवक्लृप्तिर्व्यर्थेति ध्रुवः सन्प्रतिष्ठितानु-
पकरणसंपन्नानित्यर्थः । पशुपुत्रादिभिः प्रतितिष्ठतीति दर्शनात्स्वयं च प्रतिष्ठितः
आत्मीयोपकरणसंपन्नो अव्यथमानानमित्रादित्रासरहितान् अव्यथमानश्च स्वयम-
भिसिध्यत्यभिप्राप्नोतीत्यर्थः । यावत्संकल्पस्य गतं संकल्पगोचरस्तत्रास्य यथा-
कामचारो भवति, आत्मनः संकल्पस्य न तु सर्वेषां संकल्पस्येति, उत्तरफल-
विरोधात् । यः संकल्पं ब्रह्मेत्युपास्ते इत्यादि पूर्ववत् ॥ ७.४.—

चित्तं वाव संकल्पाद्भूयो यदा वै चेतयतेऽथ संकल्पयतेऽथ मन-
स्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मंत्रा एकं भवन्ति मंत्रेषु
कर्माणि ॥१॥

चित्तं वाव संकल्पात् भूयः । चित्तं चेतयितृत्वं प्राप्तकालानुरूपबोधवत्त्वं
अतीतानागतविषयप्रयोजननिरूपणसामर्थ्यं च, तत्संकल्पादपि भूयः । कथम् ।
यदा वै प्राप्तं वस्त्विदमेवं प्राप्तमिति चेतयते, तदा तदादानाय वाऽपोहाय वाथ
संकल्पयतेऽथ मनस्यतीत्यादि पूर्ववत् ॥

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि
तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा
अयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान्भवति तस्मा एवोत
शुश्रूषन्ते चित्तं ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥२॥

तानि संकल्पादीनि कर्मफलान्तानि चित्तैकायनानि चित्तात्मानि चित्तो-
त्पत्तीनि चित्ते प्रतिष्ठितानि चित्तास्थितानीत्यपि पूर्ववत् । किंच चित्तस्य माहा-

त्म्यम् । यस्माच्चित्तं संकल्पादिमूलं तस्माद्यद्यपि बहुविद्बहुशास्त्रादिपरिज्ञानवान्स
न्नचित्तो भवति प्राप्तादिचेतयितृत्वसामर्थ्यविरहितो भवति, तं निपुणा लौकिका
नायमस्ति विद्यमानोऽप्यसत्सम एवेत्येनमाहुः । यच्चायं किंचिच्छास्त्रादि वेद श्रुत
त्वांस्तदप्यस्य वृथैवेति कथयन्ति । कस्मात् । यद्ययं विद्वान्स्यादित्थमेवमचित्त
न स्यात् तस्मादस्य श्रुतमप्यश्रुतमेवेत्याहुरित्यर्थः । अथाल्पविदपि यदि चित्त
वान्भवति तस्मा एतस्मै तदुक्तार्थग्रहणायैवोतापि शुश्रूषन्ते श्रोतुमिच्छन्ति ।
तस्माच्च चित्तं ह्येवैषां संकल्पादीनामेकायनमित्यादि पूर्ववत् ॥

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्र
तिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावच्चित्तस्य गतं तत्रास्य
यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति
चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥३॥ इति पंचमः खंडः ॥

चित्तानुपचितान्बुद्धिमद्गुणैः स चित्तोपासको ध्रुवानित्यादि चोक्तार्थम् ॥
इति पंचमः खंडः ॥ ७.५.—

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्याय
तीव द्यौर्ध्यायन्तीवापो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्मा
इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांशा इवैव ते भवन्त्यथ येऽल्पाः
कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादांशा इवैव ते भव
न्ति ध्यानमुपास्स्वेति ॥१॥

स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो
भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव
भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥ इति षष्ठः खंडः ॥

ध्यानं वाव चित्ताद्भूयः । ध्यानं नाम शास्त्रोक्तदेवताद्यालंबनेष्वचलो भिन्न
जातीयैरंतरितः प्रत्ययसंतानः । एकाग्रतेति यमाहुः । दृश्यते च ध्यानस्य मा
हात्म्यं फलतः । कथम् । यथा योगी ध्यायन्निश्चलो भवति ध्यानफललाभे । एवं
ध्यायतीव निश्चला दृश्यते पृथिवी । ध्यायतीवान्तरिक्षमित्यादि समानमन्यत्
देवाश्च मनुष्याश्च देवमनुष्या मनुष्या एव वा देवसमा देवमनुष्याः शमादिगुण
संपन्ना मनुष्या देवस्वरूपं न जहतीत्यर्थः । यस्मादेवं विशिष्टं ध्यानं, तस्मा
इह लोके मनुष्याणामेव धनैर्विद्यया गुणैर्वा महतां महत्त्वं प्राप्नुवन्ति, धनादि

त्वहेतुं लभन्ते इत्यर्थः । ध्यानापादांशा इव ध्यानस्यापादनमापादो ध्यान-लाभ इत्येतत् तस्यांशोऽवयवः कला काचित् ध्यानफललाभकलावंत इवेवे-ाः । ते भवन्ति निश्चला इव लक्ष्यन्ते न क्षुद्रा इव । अथ ये पुनरल्पाः क्षुद्राः चेदपि धनादिमहत्त्वैकदेशमप्राप्तास्ते पूर्वोक्तविपरीताः कलहिनः कलहशीलाः ाुना: परदोषोद्भासका उपवादिनः परदोषं सामीप्ययुक्तमेव वदितुं शीलं येषां उपवादिनश्च भवन्ति । अथ ये महत्त्वं प्राप्ता धनादिनिमित्तं तेऽन्यान्प्रति वन्तीति प्रभवो विद्याचार्यराजेश्वरादयो ध्यानापादांशा इव इत्याद्युक्तार्थम् , ो दृश्यते ध्यानस्य महत्त्वं फलतोऽतो भूयश्चित्तात् अतस्तदुपास्स्व इत्याद्यु-र्थम् ॥ इति षष्ठः खंडः ॥ ७.६.—

**विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं साम-माथर्वणं चतुर्थमितिहासपुराणं पंचमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं कोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्प-जनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवांश्च मनु-ंश्च पशूंश्च वयांसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतंगपिपीलकं धर्मं धर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं ं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥१॥**

विज्ञानं वाव ध्यानाद्भूयः । विज्ञानं शास्त्रार्थविषयं ज्ञानं तस्य ध्यानकारणत्वा-ानात् भूयस्त्वम् । कथं च तस्य भूयस्त्वमित्याह—विज्ञानेन वा ऋग्वेदं ज्ञानात्ययमृग्वेद इति प्रमाणतया यस्यार्थज्ञानं ध्यानकारणम् । तथा यजुर्वेद-त्यादि । किंच पश्वादींश्च धर्माधर्मौ शास्त्रसिद्धौ साध्वसाधुनी लोकतः स्मार्ते दृष्टविषयं च सर्वं विज्ञानेनैव विजानातीत्यर्थः । तस्माद्युक्तं ध्यानाद्विज्ञानस्य ूयस्त्वम् । अतो विज्ञानमुपास्स्वेति ॥

**स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽ-सिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे गवान्ब्रवीत्विति ॥२॥ इति सप्तमः खंडः ॥**

शृणु उपासनफलं विज्ञानवतः । विज्ञानं येषु लोकेषु तान्विज्ञानवतो लोका-ज्ञानवतश्च अभिसिध्यत्यभिप्राप्नोति । विज्ञानं शास्त्रार्थविषयं ज्ञानं अन्यविषयं

नैपुण्यं तद्वद्भिर्युक्ताँल्लोकान्प्राप्नोतीत्यर्थः । यावद्विज्ञानस्येत्यादि पूर्ववत् ॥ ७.७.—

**बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकंपयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मंता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनांतरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतंगपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥१॥**

**स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥ इति अष्टमः खंडः ॥**

बलं वाव विज्ञानात् भूयः । बलमित्यन्नोपयोगजनितं मनसा विज्ञेये प्रतिभानसामर्थ्यम् । अनशनात् 'ऋगादीनि न वै मा प्रतिभान्ति भो' इति श्रुतेः । शरीरेऽपि तदेवोत्थानादिसामर्थ्यं यस्माद्विज्ञानवतां शतमप्येकः प्राणी बलवानाकंपयते यथा हस्ती मत्तो मनुष्याणां शतं समुदितमपि । यस्मादेवमन्नाद्युपयोगनिमित्तं बलं तस्मात्स पुरुषो यदा बली बलेन तद्वान्भवति, अथोत्थातोत्थानस्य कर्तोत्तिष्ठंश्च गुरूणामाचार्यस्य च परिचरिता परिचरणस्य शुश्रूषायाः कर्ता भवति परिचरन्नुपसत्ता तेषां समीपगोऽन्तरंगः प्रियो भवतीत्यर्थः । उपसीदंश्च सामीप्यं गच्छन्नैकाग्रतया आचार्यस्यान्यस्य चोपदेष्टुर्गुरोर्द्रष्टा भवति । ततस्तदुक्तस्य श्रोता भवति । तत इदमेभिरुक्तमेवमुपपद्यते इत्युपपत्तितो मंता भवति । मन्वानश्च बोद्धा भवत्येवमेवेदमिति । तत एवं निश्चित्य तदुक्तार्थस्य कर्तानुष्ठाता भवति विज्ञातानुष्ठानफलस्यानुभविता भवतीत्यर्थः । किंच बलस्य माहात्म्यं बलेन वै पृथिवी तिष्ठतीत्यादि ऋज्वर्थम् ॥ इति अष्टमः खंडः ॥ ७.८.—

**अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दश रात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमंताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्यायै द्रष्टा भवति श्रोता भवति मंता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥१॥**

अन्नं वाव बलात् भूयः । बलहेतुत्वात् । कथमन्नस्य बलहेतुत्वमित्युच्यते- यस्माद्बलकारणमन्नं तस्माद्यद्यपि कश्चिद्दश रात्रीर्नाश्नीयात् सोऽन्नोपयोगनिमित्तस्य

ा हान्या म्रियते । न चेन्म्रियते यद्यु ह जीवेत्, दृश्यन्ते हि मासमप्यन- जीवन्तः । अथवा, स जीवन्नप्यद्रष्टा भवति गुरोरपि, तत एवाश्रोते- पूर्वाविपरीतं सर्वं भवति । अथ यदा बह्वन्यहान्यनशितो दर्शनादिक्रिया- र्थः सन्नन्नस्यायी । आगमनमायोऽन्नस्य प्राप्तिरित्यर्थः । स यस्य विद्यते स्यायी । आये इत्येतद्वर्णव्यत्ययेन । अथान्नस्याया इत्यपि पाठे एवमेवार्थः । दिकार्यश्रवणात् । दृश्यते ह्यन्नोपयोगे दर्शनादिसामर्थ्यं न तदप्राप्तौ । अतो मुपास्स्वेति ॥

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पानवतोऽभिसिध्यति न्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति ोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

फलं चान्नवतः प्रभूतान्नान्वै स लोकान्पानवतः प्रभूतोदकांश्च अन्नपानयोः संबंधात् लोकानभिसिध्यति । समानमन्यत् ॥ इति नवमः खंडः ॥ —

आपो वावान्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानंदिनः प्राणा भवन्त्यन्नं भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदंतरिक्षं यद्द्यौर्यत्पर्वता मनुष्या यत्पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतंग- ल्कमाप एवेमा मूर्ता अप उपास्स्वेति ॥१॥

आपो वावान्नात् भूयस्योऽन्नकारणत्वात् । यस्मादेवं तस्माद्यदा यस्मिन्काले ः सस्यहिता शोभना वृष्टिर्न भवति तदा व्याधीयन्ते प्राणा दुःखिनो भव- । किंनिमित्तमित्याह—अन्नमस्मिन्संवत्सरे नः कनीयोऽल्पतरं भविष्यतीति । पुनर्यदा सुवृष्टिर्भवति तदानंदिनः सुखिनो हृष्टाः प्राणाः प्राणिनो भवन्त्यन्नं प्रभूतं भविष्यतीति । अप्संभवत्वान्मूर्तस्यान्नस्य आप एवेमा मूर्ता, मूर्त- कारपरिणता इति मूर्ता, येयं पृथिवी यदंतरिक्षमित्यादि । आप एवेमा अतोऽप उपास्स्वेति ॥

स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामांस्तृप्तिमान्भवति यावदपां तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

फलं—स योऽपो ब्रह्मेत्युपास्ते आप्नोति सर्वान्कामान्काम्यान्मूर्तिमतो

विषयानित्यर्थः। अप्संभवत्वाच्च तृप्तेः अंबूपासानात्तृप्तिमांश्च भवति। सम
नमन्यत् ॥ इति दशमः खंडः ॥ ७.१०.-

तेजो वावाद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुिः
शोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृज
तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स
नयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते तेज उप
स्स्वेति ॥१॥

तेजो वावाद्भ्यो भूयः। तेजसोऽप्कारणत्वात्। कथमप्कारणत्वमित्याह-
यस्मादब्योनिस्तेजस्तस्माद्वा एतत्तेजो वायुमागृह्यावष्टभ्य स्वात्मना निश्चल
कृत्य वायुं आकाशमभितपत्याकाशमभिव्याप्नुवत्तपति यदा, तदाहुर्लौकिका ि
शोचति संतपति सामान्येन जगत् नितपति देहानतो वर्षिष्यति वै इति। प्रसि
हि लोके कारणमभ्युद्यतं दृष्टवतः कार्यं भविष्यतीति विज्ञानम्। तेज एव तत्पू
मात्मानमुद्भूतं दर्शयित्वा अथानंतरमपः सृजते अतोऽप्स्रष्टृत्वात् भूयोऽद्भ्यस्तेज
किंचान्यत्तदेतत्तेज एव स्तनयित्नुरूपेण वर्षहेतुर्भवति। कथम्। ऊर्ध्वाभिश्चोर्ध्व
गाभिर्विद्युद्भिस्तिरश्चीभिश्च तिर्यग्गताभिश्च सह आह्रादाः स्तनयनशब्दाश्चरन्ति
तस्मात्तद्दर्शनादाहुर्लौकिका विद्योतते स्तनयति वर्षिष्यति वै इत्याद्युक्तार्थम
अतस्तेज उपास्स्वेति ॥

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽ
हततमस्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भव
यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्ती
तन्मे भगवान्ब्रवीत्विति ॥२॥ इति एकादशः खंडः ॥

तस्य तेजस उपासनफलं— तेजस्वी वै भवति। तेजस्वत एव च ल
कान्भास्वतः प्रकाशवतोऽपहततमस्कान् बाह्याध्यात्मिकाज्ञानाद्यपनीततमस्काना
सिध्यति। ऋज्वर्थमन्यत् ॥ इति एकादशः खंडः ॥ ७.११.-

आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचंद्रमसावुभौ विद्युन्नक्षत्र
ण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत अ
काशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥१

आकाशो वाव तेजसो भूयान्। वायुसहितस्य तेजसः कारणत्वाद्व्योम्न

ागृह्येति तेजसा सहोक्तो वायुरिति पृथगिह नोक्तस्तेजसः । कारणं हि लोके
त् भूयो दृष्टम् । यथा घटादिभ्यो मृत्तथाकाशो वायुसहितस्य तेजसः कार-
ो ततो भूयान् । कथम् । आकाशे वै सूर्याचंद्रमसावुभौ तेजोरूपौ विद्युन्न-
ग्यग्निश्च तेजोरूपाण्याकाशेऽतः । यच्च यस्यांतर्वर्ति तदल्पं भूय इतरत् । किंच
शेनाह्वयति चान्यमन्यः, आहूतश्चेतर आकाशेन शृणोति, अन्योक्तं च शब्द-
प्रतिशृणोति, आकाशे रमते क्रीडत्यन्योन्यं सर्वः तथा न रमते चाकाशे
देवियोगे, आकाशे जायते न मूर्तेनावष्टब्धे । तथाकाशमभिलक्ष्य अंकुरादि
न प्रतिलोमम् । अत आकाशमुपास्स्व ॥

**स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाशवतोऽ-
बाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथाकाम-
भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव
ऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥ इति द्वादशः खंडः ॥**

ले शृणु– आकाशवतो वै विस्तारयुक्तान्स विद्वाँल्लोकान्प्रकाशवतः । प्रकाशा-
र्योर्नित्यसंबंधात्प्रकाशवतश्च लोकानसंबाधान्, संबाधनं संबाधः संबाधोऽन्यो-
डा तद्रहितानसंबाधानुरुगायवतो विस्तीर्णगतीन्विस्तीर्णप्रचाराँल्लोकानभिसि-
। यावदाकाशस्येत्याद्युक्तार्थम् ॥ इति द्वादशः खंडः ॥　　७.१२.—

**स्मरो वावाकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते
श्रृणुयुर्न मन्वीरन्न विजानीरन्यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वी-
विजानीरन्स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्स्मरमुपास्स्वेति ॥१॥
स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति
मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोऽस्तीति
भगवान्ब्रवीत्विति ॥१॥ इति त्रयोदशः खंडः ॥**

स्मरो वावाकाशात् भूयः । स्मरणं स्मरोऽन्तःकरणधर्मः । स आकाशात्
नेति द्रष्टव्यं लिंगव्यत्ययेन । स्मर्तुः स्मरणे हि सत्याकाशादि सर्वमर्थ-
स्मरणवतो भोग्यत्वात् । असति तु स्मरणे सदपि असदेव । सत्त्वकार्या-
त् । नापि सत्त्वं स्मृत्यभावे शक्यमाकाशादीनामवगंतुं इत्यतः स्मरण-
गाकाशात् भूयस्त्वम् । दृश्यते हि लोके स्मरणस्य भूयस्त्वं यस्मात्तस्माद्यद्य-
मुदिता बहव एकस्मिन्नासीरन्नुपविशेयुस्ते तत्रासीना अन्योन्यभाषितमपि न

स्मरन्तश्चेत्स्युर्नैव ते कंचन शब्दं शृणुयुः, तथा न मन्वीरन् मंतव्यं स्तदा मन्वीरन्स्मृत्यभावाच्च मन्वीरन् तथा न विजानीरन् । यदा वाव ते मंतव्यं विजातव्यं श्रोतव्यं चाथ शृणुयुरथ मन्वीरन्नथ विजानीरन् । तथा वै मम पुत्रा एत इति पुत्रान्विजानाति, स्मरेण पशून् । अतो भूयस्मुपास्स्वेति । उक्तार्थमन्यत् ॥ इति त्रयोदशः खंडः ॥

**आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मंत्रानधीते कर्माणि पुत्रांश्च पशूंश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥१॥**

आशा वाव स्मरात् भूयसी । आशाऽप्राप्तवस्त्वाकांक्षा, आशा तृष्णा इति यामाहुः पर्यायैः सा च स्मरात् भूयसी । कथम् । आशया ह्यंतःकरणस्थया स्मरति स्मर्तव्यम् । आशाविषयरूपं स्मरन्सो स्मरो भवति । अत आशयाभिवर्धितः स्मरभूतः स्मरन्नृगादीन्मंत्रानधीतेऽधीत्य च तदर्थं ब्राह्मणेभ्यो विधींश्च श्रुत्वा कर्माणि कुरुते तत्फलाशयैव, पुत्रांश्च पशूंश्च कर्मफलभूतानभिवांछति, आशयैव तत्साधनान्यनुतिष्ठति । इमं च लोकमाशेद्धः एव संग्रहहेतुभिरिच्छते । अमुं च लोकमाशेद्धः स्मरंस्तत्साधनान्यनुतिष्ठन्निच्छते आशारशनावबद्धं स्मराकाशादिनामपर्यंतं जगच्चक्रीभूतं प्रतिप्राणि । अतः स्मरादपि भूयस्त्वमित्यत आशामुपास्स्व ॥

**स य आशां ब्रह्मेत्युपास्त आशयास्य सर्वे कामाः समृध्यन्त्यमोघा हास्याशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥ इति चतुर्दशः खंडः ॥**

यस्त्वाशां ब्रह्मेत्युपास्ते शृणु तस्य फलम् । आशया सदोपासितयास्योपासकस्य सर्वे कामाः समृध्यन्ति समृद्धिं गच्छन्ति । अमोघाः हास्याशिषः प्रार्थनाः सर्वा भवन्ति, यत्प्रार्थितं सर्वं तदवश्यं भवतीत्यर्थः । यावदाशाया गतमित्यादि पूर्ववत् ॥ इति चतुर्दशः खंडः ॥ ७

**प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वं समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥१॥**

नामोपक्रममाशान्तं कार्यकारणत्वेन निमित्तनैमित्तिकत्वेन च उत्तरोत्तरभूय-
अवस्थितं स्मृतिनिमित्तसद्भावमाशारशनापाशैर्विपाशितं सर्वं सर्वतो बिस-
तंतुभिर्यस्मिन्प्राणे समर्पितम् । येन च सर्वतो व्यापिना अंतर्बहिर्गतेन सूत्रे
णा इव सूत्रेण ग्रथितं विधृतं च । स एष प्राणो वा आशाया भूयान् ।
स्य भूयस्त्वमित्याह दृष्टान्तेन समर्थयंस्तत् भूयस्त्वम्— यथा वै लोके रथ-
यारा: रथनाभौ समर्पिता: संप्रोता: संप्रवेशिता इत्येतत् एवमस्मिँल्लिंग-
रूपे प्राणे प्रज्ञात्मनि दैहिके मुख्ये, यस्मिन्परा देवता नामरूपव्याकरणाय
र्शादौ प्रतिबिंबवज्जीवेनात्मनानुप्रविष्टा । यथ महाराजस्येव सर्वाधिकारी-
न 'कस्मिन्नु अहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठा-
ति स प्राणमसृजत' इति श्रुतेः । यस्तु च्छायेवानुगत ईश्वरम् । "तद्यथा
रेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः
मात्राः प्राणेऽर्पिताः, स एष प्राण एव प्रज्ञात्मा" इति कौषीतकिनाम् । अत
स्मिन्प्राणे सर्वं यथोक्तं समर्पितम् । अतः स एष प्राणोऽपरतंत्रः प्राणेन
त्यैव याति, नान्यकृतं गमनादिक्रियास्वस्य सामर्थ्यमित्यर्थः । सर्वं क्रिया-
फलभेदजातं प्राण एव, न प्राणाद्बहिर्भूतमस्तीति प्रकरणार्थः । प्राणः प्राणं
ते । यद्ददाति तत्स्वात्मभूतमेव । यस्मै ददाति तदपि प्राणायैव । अतः
द्याख्योऽपि प्राण एव ॥

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं
कंचिद्भृशमिव प्रत्याह धिक्त्वास्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृ-
। त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि
णहा वै त्वमसीति ॥२॥

कथं पित्रादिशब्दानां प्रसिद्धार्थोत्सर्गेण प्राणविषयत्वमिति । उच्यते—
प्राणे पित्रादिषु पित्रादिशब्दप्रयोगात्तदुत्क्रान्तौ च प्रयोगाभावात् । कथं
याह स यः कश्चित्पित्रादीनामन्यतमं यदि तं भृशमिव तदननुरूपमिव किं-
चनं त्वंकारादियुक्तं प्रत्याह, तदेनं पार्श्वस्था आहुर्विवेकिनो, धिक्त्वास्तु
स्तु त्वामित्येवम् । पितृहा वै त्वं पितुर्हन्तेत्यादि ॥

अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषंदहेदेवैनं ब्रूयुः
हासीति न मातृहासीति न भ्रातृहासीति न स्वसृहासीति नाचार्य-

**हासीति न ब्राह्मणहासीति ॥३॥**

अथैनानेव उत्क्रान्तप्राणांस्त्यक्तदेहनाथान् यद्यपि शूलेन समासं सम व्यतिषंदहेद्व्यत्यस्य संदहेत् एवमप्यतिक्रूरं कर्म समासव्यत्यासादिप्रकारेण दा लक्षणं तद्देहसंबद्धमेव कुर्वाणं नैवैनं ब्रूयुः पितृहेत्यादि । तस्मादन्वयव्यतिरे भ्यामवगम्यते एतपित्राद्याख्योऽपि प्राण एवेति ॥

**प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्व एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूया पन्हुवीत ॥४॥ इति पंचदशः खंडः ॥**

तस्मात्प्राणो ह्येवैतानि पित्रादीनि सर्वाणि भवति चलानि स्थिराणि च स वा एष प्राणविदेवं यथोक्तप्रकारेण पश्यन्फलतोऽनुभवन्नेवं मन्वान उपप भिश्चितयन्नेवं विजानन्नुपपत्तिभिः संयोज्यैवमेवेति निश्चयं कुर्वन्नित्यर्थः । मन विज्ञानाभ्यां हि संभूतः शास्त्रार्थो निश्चितो दृष्टो भवेत् । अत एवं पश्यन्नतिव भवति नामाद्याशांतमतीत्य वदनशीलो भवतीत्यर्थः । तं चेत् ब्रूयुस्तं यद्येवम वादिनं सर्वदा सर्वैः शब्दैर्नामाद्याशान्तमतीत्य वर्तमानं प्राणमेवं वदन्तमेवं पः न्तमतिवदनशीलमतिवादिनं ब्रह्मादिस्तंबपर्यंतस्य हि जगतः प्राण आत्माऽहमि ब्रुवाणं यदि ब्रूयुरतिवाद्यसीति । बाढमतिवाद्यस्मीति ब्रूयान्नापन्हुवीत । कस ह्यसावपन्हुवीत । यत्प्राणं सर्वेश्वरमयमहमस्मीत्यात्मत्वेनोपगतः ॥ इति पंचद खंडः ॥ ७.१५.

स एष नारदः सर्वातिशयं प्राणं स्वमात्मानं सर्वात्मानं श्रुत्वा नातः । मस्तीत्युपरराम । न पूर्ववत्किमस्ति भगवः प्राणात् भूय इति पप्रच्छ यत मेवं विकारानृतब्रह्मविज्ञानेन परितुष्टमकृतार्थं परमार्थसत्यातिवादिनमात्मानं म मानं योग्यं शिष्यं मिथ्याग्रहविशेषाद्विप्रच्याव‌यन्नाह भगवान्सनत्कुमारः—

**एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येना वदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इ ॥१॥ इति षोडशः खंडः ॥**

एष तु वा अतिवदति यमहं वक्ष्यामि, न प्राणविदतिवादी परमार्थत नामाद्यपेक्षं तु तस्यातिवादित्वम् । यस्तु भूमाख्यं सर्वातिक्रान्तं तत्त्वं परम सत्यं वेद सोऽतिवादीत्यत आह— एष तु वा अतिवदति यः सत्येन परमार्थस

नवत्तया अतिवदति । सोऽहं त्वां प्रपन्नो भगवन्सत्येनातिवदानि । तथा नियुनक्तु भगवान्यथाहं सत्येनातिवदानीत्यभिप्रायः । यद्येवं सत्येनातिमिच्छसि सत्यमेव तु तावद्विजिज्ञासितव्यमित्युक्त आह नारदः । तथास्तु सत्यं भगवो विजिज्ञासे विशेषेण ज्ञातुमिच्छेयं त्वत्तोऽहमिति ॥ इति ः खंडः ॥

७.१६.—

**यदा वै विजानात्यथ सत्यं वदति नाविजानन्सत्यं वदति विजा: सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो ज्ञास इति ॥१॥ इति सप्तदशः खंडः ॥**

यदा वै सत्यं परमार्थतो विजानातीदं परमार्थतः सत्यमिति, ततोऽनृतं रजातं वाचारंभणं हित्वा सर्वविकारावस्थं सदेवैकं सत्यमिति तदेवाथ वदति ति । ननु विकारोऽपि सत्यमेव । 'नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः' । वै सत्यं तेषामेष सत्यम्' इति श्रुत्यंतरात् । सत्यमुक्तं सत्यत्वं श्रुत्यंतरे रस्य, न तु परमार्थापेक्षमुक्तम् । किं तर्हि? इंद्रियविषयत्वापेक्षं सच्च ति सत्यमित्युक्तं तद्द्वारेण च परमार्थसत्यस्य उपलब्धिर्विवक्षितेति । 'प्राणा त्यं तेषामेष सत्यं' इति चोक्तम् । इहापि तदिष्टमेव । इह तु प्राणविषया- ार्थसत्यविज्ञानाभिमानात् व्युत्थाप्य नारदं यत्सदेव सत्यं परमार्थतो भूमाख्यं ार्थायिष्यामीत्येष विशेषतो विवक्षितोऽर्थः । नाविजानन्सत्यं वदति यस्त्व- नन्यदति सोऽग्न्यादिशब्देन अग्न्यादीन्परमार्थसद्रूपान्मन्यमानो वदति, न रूपत्रयव्यतिरेकेण परमार्थतः सन्ति । तथा तान्यपि रूपाणि सदपेक्षया सन्तीत्यतो नाविजानन्सत्यं वदति । विजानन्नेव सत्यं वदति । न च त्यविज्ञानं अविजिज्ञासितमप्रार्थितं ज्ञायत इत्याह— विज्ञानं त्वेव ज्ञासितव्यमिति । यद्येवं विज्ञानं भगवो विजिज्ञास इति । एवं सत्यादीनां रोत्तराणां कर्त्यंतानां पूर्वपूर्वहेतुत्वं व्याख्येयम् ॥ इति सप्तदशः खंडः ॥

**यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मत्येव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥१॥ इति ादशः खंडः ॥**

यदा वै मनुत इति । मतिर्मननं तर्कः ॥ इति अष्टादशः खंडः ॥

**यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा**

त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥१॥ इति एकोनविंशतितमः खंडः ॥

मंतव्यविषये आदरः आस्तिक्यबुद्धिः श्रद्धा ॥ ७.१९.—

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥१॥ इति विंशतितमः खंडः ॥

निष्ठा गुरुशुश्रूषादितत्परत्वं ब्रह्मविज्ञानाय ॥ ७.२०.—

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥१॥ इति एकविंशः खंडः ॥

यदा वै करोति । कृतिरिंद्रियसंयमश्चित्तैकाग्रताकरणं च । सत्यां हि तस्यां निष्ठादीनि यथोक्तानि भवन्ति विज्ञानावसानानि ॥ इति एकविंशः खंडः ॥ —

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥१॥ इति द्वाविंशः खंडः ॥

सापि कृतिर्यदा सुखं लभते सुखं निरतिशयं वक्ष्यमाणं लब्धव्यं मयेति मन्यते तदा भवतीत्यर्थः । यथा दृष्टफलसुखा कृतिस्तथेहापि नासुखं लब्ध्वा करोति । भविष्यदपि फलं लब्ध्वेत्युच्यते । तदुद्दिश्य प्रवृत्त्युपपत्तेः । अथेदानीं कृत्यादिष्वुत्तरोत्तरेषु सत्सु सत्यं स्वयमेव प्रतिभासत इति न तद्विज्ञानाय पृथग्यत्नः कार्य इति प्राप्तम् । तत इदमुच्यते, सुखं त्वेव विजिज्ञासितव्यमित्यादि । सुखं भगवो विजिज्ञास इत्यभिमुखीभूतायाह ॥ इति द्वाविंशः खंडः ॥ ७.२२.—

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥१॥ इति त्रयोविंशः खंडः ॥

यो वै भूमा महन्निरतिशयं बह्विति पर्यायास्तत्सुखम् । ततोऽर्वाक्सातिशयत्वादल्पम् । अतस्तस्मिन्नल्पे सुखं नास्ति । अल्पस्याधिकतृष्णाहेतुत्वात् । तृष्णा च दुःखबीजम् । न हि दुःखबीजं सुखं दृष्टं ज्वरादि लोके । तस्माद्युक्तं नाल्पे सुखमस्तीति । अतो भूमैव सुखम् । तृष्णादिदुःखबीजत्वासंभवात् भूम्नः ॥ इति त्रयोविंशः खंडः ॥ ७.२३.—

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाथ यत्रा-
न्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं
तन्मर्त्यं स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महि-
म्नीति ॥१॥

किंलक्षणोऽसौ भूमेत्याह— यत्र यस्मिन्भूम्नि तत्त्वे नान्यत् द्रष्टव्यमन्येन
करणेन द्रष्टाऽन्यो विभक्तो दृश्यात्पश्यति । तथा नान्यच्छृणोति । नामरूपयो-
रन्तर्भावात् विषयभेदस्य तद्ग्राहकयोरेवेह दर्शनश्रवणयोर्ग्रहणमन्येषां चोपल-
क्षणार्थत्वेन । मननं त्वत्रोक्तं द्रष्टव्यं नान्यन्मनुत इति । प्रायशो मननपूर्वकत्वा-
द्विज्ञानस्य । तथा नान्यद्विजानाति । एवंलक्षणो यः स भूमा । किमत्र प्रसिद्धा-
न्यदर्शनाभावो भूम्न्युच्यते नान्यत्पश्यतीत्यादिना । अथान्यन्न पश्यत्यात्मानं
पश्यतीत्येतत् । किंचातः । यद्यन्यदर्शनाद्यभावमात्रमित्युच्यते, तदा द्वैतसंव्य-
वहारविलक्षणो भूमेत्युक्तं भवति । अथान्यदर्शनविशेषप्रतिषेधेन आत्मानं पश्य-
तीत्युच्यते, तदेकस्मिन्नेव क्रियाकारकफलभेदोऽभ्युपगतो भवेत् । यद्येवं को
दोषः स्यात् । नन्वयमेव दोषः संसारानिवृत्तिः । क्रियाकारकफलभेदो हि संसार
इति । आत्मैकत्वे एव क्रियाकारकफलभेदः संसारविलक्षण इति चेत् । न ।
आत्मनो निर्विशेषैकत्वाभ्युपगमे दर्शनादिक्रियाकारकफलभेदाभ्युपगमस्य शब्द-
मात्रत्वात् । अन्यदर्शनाद्यभावोक्तिपक्षेऽपि यत्र इति अन्यन्न पश्यतीति च विशे-
षणमनर्थकं स्यादिति चेत् । दृश्यते हि लोके यत्र शून्ये गृहेऽन्यन्न पश्यती-
त्युक्ते स्तंभादीनात्मानं च न न पश्यतीति गम्यते । एवमिहापीति चेत् । न ।
तत्त्वमसीत्यैकत्वोपदेशात् अधिकरणाधिकर्तव्यभेदानुपपत्तेः । तथा सदेकमेवा-
द्वितीयं सत्यमिति षष्ठे निर्धारितत्वात् । 'अदृश्येऽनात्म्ये' 'न संदृशे तिष्ठति रूप-
मस्य' 'विज्ञातारमरे केन विजानीयात्' इत्यादिश्रुतिभ्यः स्वात्मनि दर्शनाद्यनुप-
पत्तेः । यत्रेति विशेषणमनर्थकं प्राप्तमिति चेत् । न । अविद्याकृतभेदापेक्षत्वात् ।
यथा सत्यैकत्वाद्वितीयत्वबुद्धिं प्रकृतामपेक्ष्य सदेकमेवाद्वितीयमिति संख्याद्यनर्ह-
मप्युच्यते । एवं भूम्न्येकस्मिन्नेव यत्रेति विशेषणम् । अविद्यावस्थायां अन्यद-
र्शनानुवादेन च भूम्नस्तदभावत्वलक्षणस्य विवक्षितत्वात् नान्यत्पश्यतीति विशे-
षणम् । तस्मात्संसारव्यवहारो भूम्नि नास्तीति समुदायार्थः । अथ यत्राविद्या-
विषयेऽन्योऽन्येनान्यत्पश्यतीति तदल्पं अविद्याकालभावीत्यर्थः । यथा स्वप्नदृश्यं

वस्तु प्राक् प्रबोधात्तत्कालभावीति तद्वत् । तत एव तन्मर्त्यं विनाशि स्व
वदेव । तद्विपरीतो भूमा यस्तदमृतम् । तच्छब्दोऽमृतत्वपरः । स तर्ह्येवं
भूमा हे भगवन्कस्मिन्प्रतिष्ठित इत्युक्तवन्तं नारदं प्रत्याह सनत्कुमारः
महिम्नीति स्वे आत्मीये महिम्नि माहात्म्ये विभूतौ प्रतिष्ठितो भूमा । यदि
ष्ठामिच्छसि क्वचिद्यदि वा परमार्थमेव पृच्छसि, न महिम्न्यपि प्रतिष्ठित
ब्रूमः । अप्रतिष्ठितोऽनाश्रितो भूमा क्वचिदपीत्यर्थः ॥

**गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यात
नीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित इति
इति चतुर्विंशः खंडः ॥**

यदि स्वमहिम्नि प्रतिष्ठितो भूमा कथं तर्ह्यप्रतिष्ठ उच्यते । शृणु
अश्वादीह महिमेत्याचक्षते । गावश्चाश्वाश्च गोअश्वं द्वंद्वैकवद्भावः । सर्वत्र
श्वादि महिमेति प्रसिद्धम् । तदाश्रितस्तत्प्रतिष्ठश्चैत्रो भवति यथा, न
स्वतोऽन्यं महिमानमाश्रितो भूमा चैत्रवदिति ब्रवीमि. अन्य हेतुत्वेनान्यो
स्मिन्प्रतिष्ठित इति व्यवहितेन संबंधः । किंत्वेवं ब्रवीमीति होवाच स
त्यादि ॥ इति चतुर्विंशः खंडः ॥ ७.२.

**स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उ
स एवेदं सर्वमित्यथातोऽहंकारादेश एवाहमेवाधस्तादहमुपरिष्टादहं प
पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वमिति ॥१॥**

कस्मात्पुनः क्वचिन्न प्रतिष्ठित इत्युच्यते--- यस्मात्स एव भूमा अध
तद्व्यतिरेकेणान्यन्नास्ति यस्मिन्प्रतिष्ठितः स्यात् । तथोपरिष्टादित्यादि समा
सति भूम्नोऽन्यस्मिन्भूमा हि प्रतिष्ठितः स्यान्न तु तदस्ति । स एव तु स
अतस्तस्माद्भूमा न क्वचित्प्रतिष्ठितः । 'यत्र नान्यत्पश्यति' इत्यधिकरणा
व्यतानिर्देशात्स एवाधस्तादिति च परोक्षनिर्देशात् द्रष्टुर्जीवादन्यो भूमा स्
त्याशंका कस्यचिन्मा भूदित्यथातोऽनंतरं अहंकारादेशोऽहंकारेणादिश्यत
हंकारादेशः । द्रष्टुरनन्यत्वदर्शनार्थं भूमैव निर्दिश्यतेऽहंकारेण अहमेवाध
दित्यादिना ॥

**अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चाद
पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति स वा एष**

श्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानंदः स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति। अथ येऽन्यथातो ादुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्वकामचारो वति ॥२॥ इति पंचविंशः खंडः ॥

अहंकारेण देहादिसंघातोऽप्यादिश्यतेऽविवेकिभिः इत्यतस्तदाशंका मा दित्यथानंतरं आत्मादेश आत्मनैव केवलेन सत्स्वरूपेण शुद्धेनादिश्यते। आ- ैव सर्वतः सर्वमित्येवमेकमजं सर्वतो व्योमवत्पूर्णमन्यशून्यं पश्यन्स वा एष द्वान्मननविज्ञानाभ्यां आत्मरतिरात्मन्येव रती रमणं यस्य सोऽयमात्मरतिः। थात्मक्रीडः। देहमात्रसाधना रतिर्बाह्यसाधना क्रीडा। लोके स्त्रीभिः सखि- भिश्च क्रीडतीति दर्शनात्। न तथा विदुषः, किं तर्हि, आत्मविज्ञाननिमित्तमेवो- ायं भवतीत्यर्थः। मिथुनं द्वंद्वजनितं सुखं तदपि द्वंद्वनिरपेक्षं यस्य विदुषः। थात्मानंदः, शब्दादिनिमित्त आनंदोऽविदुषां, न तथास्य विदुषः, किं तर्ह्यात्म- निमित्तमेव सर्वं सर्वदा सर्वप्रकारेण च। देहजीवितभोगादिनिमित्तबाह्यवस्तु- निरपेक्ष इत्यर्थः। स एवंलक्षणो विद्वाञ्जीवन्नेव स्वाराज्येऽभिषिक्तः पतितेऽपि हे स्वराडेव भवति। यत एवं भवति तत एव तस्य सर्वेषु लोकेषु कामचारो ावति। प्राणादिषु पूर्वभूमिषु 'तत्रास्य' इति तावन्मात्रपरिच्छिन्नकामचारत्वमुक्तम्। न्यराजत्वं चार्थप्राप्तं सातिशयत्वात्। यथाप्राप्तस्वाराज्यकामचारत्वानुवादेन तत्त- क्षन्नतिरिहोच्यते स स्वराडित्यादिना। अथ पुनर्येऽन्यथा अत उक्तदर्शनादन्यथा ापरीत्येन यथोक्तमेव वा सम्यङ्न विदुः, तेऽन्यराजानो भवन्ति अन्यः परो ाजा स्वामी येषां तेऽन्यराजानस्ते। किंच क्षय्यलोकाः क्षय्यो लोको येषां ते य्यलोकाः। भेददर्शनस्याल्पविषयत्वात्। अल्पं च तन्मर्त्यमित्यवोचाम। ास्माद्ये द्वैतदर्शिनस्ते क्षय्यलोकाः स्वदर्शनानुरूप्येणैव भवन्त्यत एव तेषां सर्वेषु ोकेष्वकामचारो भवति ॥ इति पंचविंशः खंडः ॥ ७.२५.—

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः ाण आत्मत आशात्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्म- तो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मंत्रा आत्मतः कर्माण्यात्मत एवेदं सर्वमिति ॥१॥

तस्य ह वा एतस्येत्यादि स्वाराज्यं प्राप्तस्य प्रकृतस्य विदुष इत्यर्थः प्राक्सदात्मविज्ञानात् स्वात्मनोऽन्यस्मात्सतः प्राणादेर्नामान्तस्योत्पत्तिप्रलयाव भूताम् । सदात्मविज्ञाने तु सतीदानीं स्वात्मत एव संवृत्तौ । तथा सर्वोऽप्यन्यं व्यवहार आत्मत एव विदुषः ॥

**तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पंचधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः शतं च दश चैकश्च सहस्राणि च विंशतिराहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलंभे सर्वग्रंथीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान्सनत्कुमारस्तं स्कंद इत्याचक्षते तं स्कंद इत्याचक्षते ॥२॥ इति षड्विंशखंडः ॥ इति सप्तमोऽध्यायः ॥**

किंच तदेतस्मिन्नर्थ एष श्लोको मंत्रोऽपि भवति । न पश्यः पश्यतीति पश्यो यथोक्तदर्शी विद्वानित्यर्थः । मृत्युं मरणं रोगं ज्वरादि दुःखतां दुःखभावं चापि न पश्यति । सर्वं ह सर्वमेव स पश्यः पश्यत्यात्मानमेव । सर्वं ततः सर्वमाप्नोति सर्वशः सर्वप्रकारैरिति । किंच स विद्वान्प्राक्सृष्टिप्रभेदादेकधैव भवति एकधैव च सन्त्रिधादिभेदैरनंतभेदप्रकारो भवति सृष्टिकाले । पुनः संहारकाले मूलमेव स्वं पारमार्थिकमेकधाभावं प्रतिपद्यते स्वतंत्र एवेति विद्यां फलेन प्ररोचयन्स्तौति । अथेदानीं यथोक्ताया विद्यायाः सम्यगवभासकारणं मुखावभासकारणस्येव आदर्शस्य विशुद्धिकारणं साधनमुपदिश्यते— आहारशुद्धौ । आह्रियत इत्याहारः शब्दादिविषयविज्ञानं भोक्तुर्भोगायाह्रियते । तस्य विषयोपलब्धिलक्षणस्य विज्ञानस्य शुद्धिराहारशुद्धिः रागद्वेषमोहदोषैरसंसृष्टं विषयविज्ञानमित्यर्थः । तस्यामाहारशुद्धौ सत्यां तद्वतोऽन्तःकरणस्य सत्त्वस्य शुद्धिर्नैर्मल्यं भवति । सत्त्वशुद्धौ च सत्यां यथावगते भूमात्मनि ध्रुवा अविच्छिन्ना स्मृतिरविस्मरणं भवति । तस्यां च लब्धायां स्मृतिलंभे सति सर्वेषां अविद्याकृतानर्थपाशरूपाणां अनेकजन्मान्तरानुभवभावनाकठिनीकृतानां हृदयाश्रयाणां ग्रंथीनां विप्रमोक्षो विशेषेण प्रमोक्षणं विनाशो भवतीति । यत एतदुत्तरोत्तरं यथोक्तमाहारशुद्धिमूलं तस्मात्सा कार्येत्यर्थः । सर्वं शास्त्रार्थमशेषत उक्त्वा आख्यायिकामुपसंहरति श्रुतिः— तस्मै मृदितकषायाय वार्क्षादिरिव कषायो रागद्वेषादि

सत्त्वस्य रंजनारूपत्वात्स ज्ञानवैराग्याभ्यासरूपक्षारेण क्षालितो मृदितो शितो यस्य नारदस्य, तस्मै योग्याय मृदितकषायाय तमसोऽविद्यालक्षणा- परमार्थतत्त्वं दर्शयति दर्शितवानित्यर्थः । कोऽसौ, भगवान् "उत्पत्तिं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवा- ॥" एवंधर्मा सनत्कुमारः । तमेव सनत्कुमारं देवं स्कंद इत्याचक्षते कथ- तद्विदः । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ इति सप्तमोऽध्यायः ॥

---

## ॥ अष्टमोऽध्यायः ॥

यद्यपि दिग्देशकालादिभेदशून्यं ब्रह्म 'सदेकमेवाद्वितीयं आत्मैवेदं सर्वं' षष्ठसप्तमयोरधिगतं, तथापीह मंदबुद्धीनां दिग्देशादिभेदवद्वस्त्विति एवं भाविता न शक्यते सहसा परमार्थविषया कर्तुमित्यनधिगम्य च ब्रह्म न पुरुषार्थ- सिद्धिरिति तदधिगमाय हृदयपुंडरीकदेश उपदेष्टव्यः । यद्यपि सत्सम्यक्प्रत्य- विषयं निर्गुणं चात्मतत्त्वं, तथापि मंदबुद्धीनां गुणवत्त्वस्येष्टत्वात् सत्यकामा- गुणवत्त्वं च वक्तव्यम् । तथा यद्यपि ब्रह्मविदां स्त्र्यादिविषयेभ्यः स्वयमेवो- पर भवति तथाप्यनेकजन्मविषयसेवाभ्यासजनिता विषयविषया तृष्णा न सा निवर्तयितुं शक्यत इति ब्रह्मचर्यादिसाधनविशेषो विधातव्यः । तथा यात्मैकत्वविदां गंतृगमनगंतव्याभावात् अविद्यादिशेषस्थितिनिमित्तक्षये गगन विद्युदुद्भूत इव वायुर्दग्धेंधन इवाग्निः स्वात्मन्येव निवृत्तिः, तथापि गंतृ- नादिवासितबुद्धीनां हृदयदेशगुणविशिष्टब्रह्मोपासकानां मूर्धन्यया नाड्या वक्तव्येत्यष्टमः प्रपाठक आरभ्यते । दिग्देशगुणगतिफलभेदशून्यं हि परमार्थ- द्वयं ब्रह्म मंदबुद्धीनामसदिव प्रतिभाति । सन्मार्गस्थास्तावद्भवन्तु ततः शनैः मार्थमपि ग्राहयिष्यामीति मन्यते श्रुतिः—

ॐ । अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतरा- शस्तस्मिन्यदंतस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥१॥

अथानंतरं यदिदं वक्ष्यमाणं दहरमल्पं पुंडरीकं पुंडरीकसदृशं वेश्मेव वेश्म पाल्यादिमत्त्वात् । अस्मिन्ब्रह्मपुरे ब्रह्मणः परस्य पुरं, राज्ञोऽनेकप्रकृतिमद्यथा , तथेदमनेकेंद्रियमनोबुद्धिभिः स्वाम्यर्थकारिभिर्युक्तमिति ब्रह्मपुरम् । पुरे च न राज्ञो यथा, तथा तस्मिन्ब्रह्मपुरे शरीरे दहरं वेश्म, ब्रह्मण उपलब्ध्यधिष्ठान-

मित्यर्थः । यथा तथा विष्णोः शालग्रामः । अस्मिन् हि स्वविकारशुंगे देहे नामरूपव्याकरणाय प्रविष्टं सदाख्यं ब्रह्म जीवेनात्मनेत्युक्तम् । तस्मादस्मिन्हृदयपुंडरीके वेश्मनि उपसंहृतकरणैर्बाह्यविषयविरक्तैः विशेषतो ब्रह्मचर्यसत्यसाधनाभ्यां युक्तैर्वक्ष्यमाणगुणवद्ध्यायमानैर्ब्रह्मोपलभ्यत इति प्रकरणार्थः । दहरोऽल्पतरोऽस्मिन्दहरे वेश्मनि वेश्मनोऽल्पत्वात्तदंतर्वर्तिनोऽल्पतरत्वं वेश्मनः । अंतराकाश आकाशाख्यं ब्रह्म । 'आकाशो वै नाम' इति हि वक्ष्यति । आकाश इवाशरीरत्वसूक्ष्मत्वसर्वगतत्वसामान्याच्च । तस्मिन्नाकाशाख्ये यदंतर्मध्ये तदन्वेष्टव्यम् । तत्सदेव च विशेषेण जिज्ञासितव्यं गुर्वाश्रयश्रवणाद्युपायैरन्विष्य च साक्षात्करणीयमित्यर्थः ॥

**तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् ॥२॥**

तं चेदेवमुक्तवन्तमाचार्यं यदि ब्रूयुरंतेवासिनः चोदयेयुः, कथं, यदिदमस्मिन्ब्रह्मपुरे परिच्छिन्नेऽन्तर्दहरं पुंडरीकं वेश्म, ततोऽप्यंतरल्पतर एवाकाशः पुंडरीक एव वेश्मनि तावत्किं स्यात् । किं ततोऽल्पतरे खे यद्भवेदित्याहु दहरोऽस्मिन्नंतराकाशः किं तदत्र विद्यते, न किंचन विद्यत इत्यभिप्रायः । यदि नाम बदरमात्रं किमपि विद्यते, किं तस्यान्वेषणेन विजिज्ञासनेन वा फलं विजिज्ञासितुः स्यात् । अतो यत्तत्रान्वेष्टव्यं विजिज्ञासितव्यं वा न तेन प्रयोजनमित्युक्तवतः स आचार्यो ब्रूयादिति श्रुतेर्वचनम् ॥

**यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अंतरेव समाहिते उभावग्निश्च वायुश्च सूर्याचंद्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥३॥**

शृणुत । तत्र यत् ब्रूथ पुंडरीकांतःस्थस्य खस्याल्पत्वात्तत्स्थमल्पतरं स्यादिति तदसत् । न हि खं पुंडरीकवेश्मगतं पुंडरीकादल्पतरं मत्वाऽवोचं दहरोऽस्मिन्नंतराकाश इति । किं तर्हि, पुंडरीकमल्पं तदनुविधायि तत्स्थमंतःकरणं पुंडरीकाकाशपरिच्छिन्नं तस्मिन्विशुद्धे संहृतकरणानां योगिनां स्वच्छ इवोदके प्रतिबिंबरूपमादर्श इव च शुद्धे स्वच्छं विज्ञानज्योतिः स्वरूपावभासं तावन्मात्रं ब्रह्मोपलभ्यत इति दहरोऽस्मिन्नंतराकाश इत्यवोचाम अंतःकरणोपाधिनिमित्तः

स्तु यावान्वै प्रसिद्धः परिमाणतोऽयमाकाशो भौतिकः, तावानेषोऽन्तर्हृदय
ाशो यस्मिन्नन्वेष्टव्यं विजिज्ञासितव्यं चावोचाम । नाप्याकाशतुल्यपरिमाण-
भिप्रेत्य तावानित्युच्यते । किं तर्हि ब्रह्मणोऽनुरूपस्य दृष्टान्तान्तरस्याभावात् ।
पुनर्नाकाशसममेव ब्रह्मेत्यवगम्यते 'येनावृतं खं च दिवं महीं च' 'तस्माद्वा एत-
दात्मन आकाशः संभूतः' 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाशः' इत्यादिश्रुतिभ्यः ।
चोभे अस्मिन्द्यावापृथिवी ब्रह्माकाशे बुद्ध्युपाधिविशिष्टे अंतरेव समाहिते सम्य-
हिते स्थिते । 'यथा वा अरा नाभौ' इत्युक्तं हि । तथोभौ अग्निश्च वायुश्चेत्यादि
ानम् । यच्चास्यात्मन आत्मीयत्वेन देहवतोऽस्ति विद्यत इह लोके । तथा
चात्मीयत्वेन न विद्यते । नष्टं भविष्यच्च नास्तीत्युच्यते । न त्वत्यंतमेवासत् ।
य हृद्याकाशे समाधानानुपपत्तेः ॥

**तं चेद्ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे कामा यदैतज्जरा वाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति ॥४॥**

तं चेदेवमुक्तवन्तं ब्रूयुः पुनरंतेवासिनः— अस्मिंश्चेद्यथोक्ते चेद्यदि ब्रह्मपुरे
पुरोपलक्षितान्तकाराशे इत्यर्थः । इदं सर्वं समाहितं सर्वाणि च भूतानि सर्वे
कामाः । कथमाचार्येणानुक्ताः कामा अंतेवासिभिरुच्यन्ते । नैष दोषः ।
ास्येहास्ति यच्च नास्तीत्युक्ता एव ह्याचार्येण कामाः । अपि च सर्वशब्देन
क्ता एव कामाः । यदा यस्मिन्काल एतच्छरीरं ब्रह्मपुराख्यं जरा वलीपलिता-
लक्षणा वयोहानिर्वा आप्नोति, शस्त्रादिना वा व्रणं प्रध्वंसते विस्रंसते विन-
ति, किं ततोऽन्यदतिशिष्यते ? घटाश्रितक्षीरदधिस्नेहादिवत् घटनाशे देहनाशे-
े देहाश्रयमुत्तरोत्तरं पूर्वपूर्वनाशान्नश्यतीत्यभिप्रायः । एवं प्राप्ते नाशे किं ततो-
यद्यथोक्तादतिशिष्यतेऽवतिष्ठते, न किंचनावतिष्ठत इत्यभिप्रायः ॥

**स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुर-स्मिन्कामाः समाहिता एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमंतमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमे-वोपजीवन्ति ॥५॥**

एवमंतेवासिभिश्चोदितः स आचार्यो ब्रूयात्तन्मतिमपनयन् । कथम् ।
स्य देहस्य जरयैतद्यथोक्तमंतराकाशाख्यं ब्रह्म यस्मिन्सर्वं समाहितं न जीर्यति

देहवच्च विक्रियत इत्यर्थः । न चास्य वधेन शस्त्रादिघातेनैतद्धन्यते यथ
किमु ततोऽपि सूक्ष्मतरमशब्दमस्पर्शं ब्रह्म देहेंद्रियादिदोषैर्न स्पृश्यत इ
कथं देहेंद्रियादिदोषैर्न स्पृश्यते इत्येतस्मिन्नवसरे वक्तव्यं प्राप्तं, त
व्यासंगो मा भूदिति नोच्यते । इंद्रविरोचनाख्यायिकायां उपरिष्टाद्व
युक्तितः । एतत्सत्यमवितथं ब्रह्मपुरं ब्रह्मैव पुरं ब्रह्मपुरं, शरीराख्यं
पुरं ब्रह्मोपलक्षणार्थत्वात् । तत्त्वनृतमेव । 'वाचारंभणं विकारो नाम
इति श्रुतेः । तद्विकारेऽनृतेऽपि देहशुंगे ब्रह्मोपलभ्यत इति ब्रह्मपुरमित्युक्तं
हारिकम् । सत्यं तु ब्रह्मपुरमेतदेव ब्रह्म । सर्वव्यवहारास्पदत्वात् । अतोऽ
शरीकोपलक्षिते ब्रह्मपुरे सर्वे कामा, ये बहिर्भवद्भिः प्रार्थ्यन्ते, तेऽस्मिन्नेव
त्मनि समाहिताः । अतस्तत्प्राप्त्युपायमेवानुतिष्ठत बाह्यविषयतृष्णां त्यजत
प्रायः । एष आत्मा भवतां स्वरूपम् । शृणुत तस्य लक्षणम् । अपहत
अपहतः पाप्मा धर्माधर्माख्यो यस्य सोऽयमपहतपाप्मा । तथा विजरो
जरो विमृत्युश्च । तदुक्तं पूर्वमेव न वधेनास्य हन्यत इति । किमर्थं पुनरु
यद्यपि देहसंबंधिभ्यां जरामृत्युभ्यां न संबध्यते, अन्यथापि संबंधस्तावत्
दित्याशंकानिवृत्त्यर्थम् । विशोको विगतशोकः । शोको नामेष्टादिवियोगनि
मानसः संतापः । विजिघत्सो विगताशनेच्छः । अपिपासोऽपानेच्छः
अपहतपाप्मत्वेन जरादयः शोकान्ताः प्रतिषिद्धा एव भवन्ति । कारण
धात् । धर्माधर्मकार्या हि ते इति । जरादिप्रतिषेधेन वा धर्माधर्मयोः का
विद्यमानयोरप्यसत्समत्वमिति पृथक्प्रतिषेधोऽनर्थकः स्यात् । सत्यमेवं,
धर्मकार्यानंदव्यतिरेकेण स्वाभाविकानंदो यथेश्वरे 'विज्ञानमानंदं ब्रह्म' इति
तथाऽधर्मकार्यजरादिव्यतिरेकेणापि जरादिदुःखस्वरूपं स्वाभाविकं स्यादि
क्येत । अतो युक्तस्तन्निवृत्तये जरादीनां धर्माधर्माभ्यां पृथक्प्रतिषेधः ।
ग्रहणं सर्वदुःखोपलक्षणार्थम् । पापनिमित्तानां तु दुःखानामानंत्यात्प्रत्ये
तत्प्रतिषेधस्याशक्यत्वात् सर्वदुःखप्रतिषेधार्थं युक्तमेवापहतपाप्मत्ववच
सत्या अवितथाः कामा यस्य सोऽयं सत्यकामः । वितथा हि संसारिणां क
ईश्वरस्य तद्विपरीताः । तथा कामहेतवः संकल्पा अपि सत्या यस्य स
कल्पः । संकल्पाः कामाश्च शुद्धसत्त्वोपाधिनिमित्ता ईश्वरस्य । चित्रगुव
स्वतो 'नेति नेति' इत्युक्तत्वात् । यथोक्तलक्षण एवात्मा विज्ञेयो गुरुभ्यः

आत्मसंवेद्यतया च स्वाराज्यकामैः । न चेद्विज्ञायते को दोषः स्यादिति, तात्र दोषं दृष्टान्तेन । यथा ह्येवेह लोके प्रजा अन्वाविशन्त्यनुवर्तन्ते यथा-सनं, यथेह प्रजा अन्यं स्वामिनं मन्यमानाः तस्य स्वामिनो यथा यथानु-नं तथा तथान्वाविशन्ति । किम् । यं यमंतं प्रत्यंतं जनपदं क्षेत्रभागं चा-ामा अर्थिन्यो भवन्त्यात्मबुद्ध्यनुरूपं, तं तमेव च प्रत्यंतादिमुपजीवन्तीति । दृष्टान्तोऽस्वातंत्र्यदोषं प्रति पुण्यफलोपभोगे ॥

**तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षी-तद्य इहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोके-ामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामांस्तेषां षु लोकेषु कामचारो भवति ॥६॥ इति प्रथमः खंडः ॥**

अथान्यो दृष्टान्तस्तत्क्षयं प्रति तद्यथेहेत्यादिः । तत्तत्र यथेह लोके तासा-स्वाम्यनुशासनानुवर्तिनीनां प्रजानां सेवादिजितो लोकः पराधीनोपभोगः तेऽन्तवान्भवति । अथेदानीं दार्ष्टान्तिकमुपसंहरति-एवमेवामुत्र अग्निहोत्रा-ण्यजितो लोकः पराधीनोपभोगः क्षीयत एवेति । उक्तो दोष एषामिति वि-दर्शयति तद्य इत्यादिना । तत्तत्र ये इहास्मिँल्लोके ज्ञानकर्मणोरधिकृता योग्याः । आत्मानं यथोक्तलक्षणं शास्त्राचार्योपदिष्टमननुविद्य यथोपदेशमनु स्वसंवेद्य-ाकृत्वा व्रजन्ति देहादस्मात्प्रयन्ति, य एतांश्च यथोक्तान्सत्यान् सत्यसंकल्प-ांश्च स्वात्मस्थान्कामानननुविद्य व्रजन्ति, तेषां सर्वेषु लोकेष्वकामचारोऽस्व-ता भवति । यथा राजानुशासनानुवर्तिनीनां प्रजानामित्यर्थः । अथ येऽन्य लोक आत्मानं शास्त्राचार्योपदेशमनुविद्य स्वात्मसंवेद्यतामापाद्य व्रजन्ति यथो-श्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति, राज्ञ इव सार्वभौमस्येह ॥ इति प्रथमः खंडः ॥ ८.१.—

**स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति पितृलोकेन संपन्नो महीयते ॥१॥**

कथं सर्वेषु लोकेषु कामचारो भवतीति, उच्यते— य आत्मानं यथो-लक्षणं हृदि साक्षात्कृतवान् वक्ष्यमाणब्रह्मचर्यादिसाधनसंपन्नः संस्तत्स्थांश्च ान्कामान्स त्यक्तदेहो यदि पितृलोककामः, पितरो जनयितारस्त एव सुख-त्वेन भोग्यत्वाल्लोका उच्यन्ते तेषु कामो यस्य तैः पितृभिः संबंधेच्छा यस्य

भवति तस्य संकल्पमात्रादेव पितरः समुत्तिष्ठन्त्यात्मसंबंधितामापद्यन्ते । वि सत्त्वतया सत्यसंकल्पत्वादीश्वरस्येव । तेन पितृलोकेन भोगेन संपन्नः सं रिष्टप्राप्तिस्तया समृद्धो महीयते पूज्यते वर्धते वा महिमानमनुभवति ॥

**अथ यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समु न्ति तेन मातृलोकेन संपन्नो महीयते ॥२॥ अथ यदि भ्रातृलोक भवति संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो यते ॥३॥ अथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः त्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते ॥४॥ अथ यदि सखिलोक भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो यते ॥५॥ अथ यदि गंधमाल्यलोककामो भवति संकल्पादेवास्य गंधम समुत्तिष्ठतस्तेन गंधमाल्यलोकेन संपन्नो महीयते ॥६॥ अथ यद्यन्न लोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानल संपन्नो महीयते ॥७॥ अथ यदि गीतवादित्रलोककामो भवति संकल वास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन संपन्नो महीयते अथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति स्त्रीलोकेन संपन्नो महीयते ॥९॥**

समानमन्यत् । मातरो जनयित्र्योऽतीताः सुखहेतुभूताः सामर्थ्यात् हि दुःखहेतुभूतासु ग्रामसूकरादिजन्मनिमित्तासु मातृषु विशुद्धसत्त्वस्य ये इच्छा तत्संबंधो वा युक्तः ॥

**यं यमंतमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव त्तिष्ठति तेन संपन्नो महीयते ॥ इति द्वितीयः खंडः ॥**

यं यमंतं प्रदेशमभिकामो भवति, यं च कामं कामयते यथोक्तव्यति णापि, सोऽस्यांतः प्राप्तुमिष्टः कामश्च संकल्पादेव समुत्तिष्ठत्यस्य । तेनेच्छ घाततया अभिप्रेतार्थप्राप्त्या च संपन्नो महीयत इत्युक्तार्थम् ॥ ८.२

**त इमे सत्याः कामा अनृतापिधानास्तेषां सत्यानां सतामनृतः धानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥१॥**

यथोक्तात्मध्यानसाधनानुष्ठानं प्रति साधकानां उत्साहजननार्थमनु न्त्याह— कष्टमिदं खलु वर्तते यत्स्वात्मस्थाः शक्यप्राप्या अपि त इमे स

अनृतापिधानाः तेषामात्मस्थानां स्वाश्रयाणामेव सतामनृतं बाह्यविषयेषु
भोजनाच्छादनादिषु तृष्णा तन्निमित्तं च स्वेच्छाप्रचारत्वं मिथ्याज्ञाननिमि-
दनृतमित्युच्यते । तन्निमित्तं सत्यानां कामानामप्राप्तिरिति अपिधानमिवापि-
[ । कथमनृतापिधाननिमित्तं तेषामलाभ इति, उच्यते— यो यो हि यस्मा-
जंतोः पुत्रो भ्राता वेष्टः इतोऽस्माल्लोकात्प्रैति प्रगच्छति म्रियते, तमिष्टं पुत्रं
[ वा स्वहृदयाकाशे विद्यमानमपीह पुनर्दर्शनार्थेच्छन्नपि न लभते ॥

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र विंदतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं तमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विंदेयुरेवमेवेमाः सर्वाः प्रजा अहर-छन्त्य एतं ब्रह्मलोकं न विंदन्त्यनृतेन हि प्रत्यूढाः ॥२॥**

अथ पुनर्ये चास्य विदुषो जंतोर्जीवा जीवन्तीह पुत्रा भ्रात्रादयो वा, ये
ता मृता इष्टाः संबंधिनो, यच्चान्यदिह लोके वस्त्रान्नपानादि रत्नादि वा
च्छन्न लभते, तत्सर्वमत्र हृदयाकाशाख्ये ब्रह्मणि गत्वा यथोक्तेन विधिना
[ लभते । अत्रास्मिन्हार्दाकाशे हि यस्मादस्यैते यथोक्ताः सत्याः कामा
ऽनृतापिधानाः । कथमिव तदन्याय्यमित्युच्यते— तत्तत्र यथा हिरण्य-
हिरण्यमेव पुनर्ग्रहणाय निधातृभिर्निधीयत इति निधिस्तं हिरण्यनिधिं नि-
भूमेरधस्तान्निक्षिप्तमक्षेत्रज्ञा निधिशास्त्रैर्निधिक्षेत्रमजानन्तः ते निधेरुपर्युपरि
न्तोऽपि निधिं न विंदेयुः शक्यवेदनमपि । एवमेवेमा अविद्यावत्यः सर्वा
प्रजा यथोक्तं हृदयाकाशाख्यं ब्रह्मलोकं ब्रह्मैव लोको ब्रह्मलोकस्तमहरहः
[ गच्छन्त्योऽपि सुषुप्तकाले न विंदन्ति न लभन्ते, एषोऽहं ब्रह्मलोकभाव-
ोऽस्म्यद्येति । अनृतेन हि यथोक्तेन हि यस्मात्प्रत्यूढा हृताः स्वरूपादवि-
देोषैर्बहिरपकृष्टा इत्यर्थः । अतः कष्टमिदं वर्तते जंतूनां यत्स्वायत्तमपि ब्रह्म
भ्यत इत्यभिप्रायः ॥

**स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदय-हर्वा एवंवित्स्वर्गं लोकमेति ॥३॥**

स वै य 'आत्मापहतपाप्मा' इति प्रकृतो वैशब्देन तं स्मारयति । एष
ऽत आत्मा हृदि हृदयपुंडरीक आकाशशब्देनाभिहितः । तस्यैतस्य हृदयस्यै-
निरुक्तं निर्वचनं नान्यत् । हृद्ययमात्मा वर्तत इति यस्मात्तस्मात् हृदयं

हृदयनामनिर्वचनप्रसिद्ध्यापि स्वहृदय आत्मेत्यवगंतव्यमित्यभिप्रायः । अहरहर्वै प्रत्यहमेवंवित् हृदययमात्मेति जानन्स्वर्गं लोकं हार्दं ब्रह्मेति प्रतिपद्यते । नन्वनेवंविदपि सुषुप्तकाले हार्दं ब्रह्म प्रतिपद्यत एव, 'सता सोम्य तदा संपन्नः' इत्युक्तत्वात् । बाढमेवं तथाप्यस्ति विशेषः । यथा जानन्नजानंश्च सर्वो जंतुः सद्ब्रह्मैव, तथापि तत्त्वमसीति प्रतिबोधितो विद्वान्सदेव नान्योऽस्मीति जानन्सदेव भवति । एवमेव विद्वानविद्वांश्च सुषुप्ते यद्यपि सत्संपद्यते तथाप्येवंविदेव स्वर्गं लोकमेतीत्युच्यते । देहपातेऽपि विद्याफलस्यावश्यंभावित्वादित्येष विशेषः ॥

**अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥४॥**

सुषुप्तकाले स्वेनात्मना सता संपन्नः सन्सम्यक्प्रसीदतीति जाग्रत्स्वप्नयोः विषयेंद्रियसंयोगजातं कालुष्यं जहातीति संप्रसादशब्दो यद्यपि सर्वजंतूनां साधारणः तथाप्येवंवित्स्वर्गं लोकमेतीति प्रकृतत्वादेष संप्रसाद इति संनिहितवद्यत्नविशेषात्सोऽथेदं शरीरं हित्वास्माच्छरीरात्समुत्थाय शरीरात्मभावनां परित्यज्येत्यर्थः । न त्वासनादिव समुत्थायेतीह युक्तम् । स्वेन रूपेणेति विशेषणात् । न ह्यन्यत उत्थाय स्वरूपं संपत्तव्यम् । स्वरूपमेव हि तन्न भवति प्रतिपत्तव्यं चेत्स्यात् । परं परमात्मलक्षणं विज्ञप्तिस्वभावं ज्योतिरुपसंपद्य स्वास्थ्यमुपगम्येत्येतत् । स्वेनात्मीयेन रूपेणाभिनिष्पद्यते, प्रागेतस्याः स्वरूपसंपत्तेरविद्यया देहमेवापरं रूपमात्मत्वेनोपगत इति तदपेक्षयेदमुच्यते स्वेन रूपेणेति । अशरीरता ह्यात्मनः स्वरूपम् । यत्स्वं परं ज्योतिःस्वरूपमापद्यते संप्रसाद एष आत्मेति होवाच । स ब्रूयादिति यः श्रुत्वा नियुक्तोऽन्तेवासिभ्यः । किंचैतदमृतमविनाशि भूमा 'यो वै भूमा तदमृतं' इत्युक्तम् । अत एवाभयं भूम्नो द्वितीयाभावात् । अत एतद्ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नामाभिधानम् । किं तत्सत्यमिति । सत्यं ह्यवितथं ब्रह्म । 'तत्सत्यं स आत्मा' इति ह्युक्तम् । अथ किमर्थमिदं नाम पुनरुच्यते । तदुपासनविधिस्तुत्यर्थम् ॥

**तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥५॥ इति तृतीयः खंडः ॥**

तानि ह वा एतानि ब्रह्मणो नामाक्षराणि त्रीण्येतानि सतीयमिति, सकार-
कारो यमिति च। ईकारस्तकारे उच्चारणार्थोऽनुबंधः। ह्रस्वेनैवाक्षरेण पुनः
तिनिर्देशात्। तेषां तत्तत्र यत्सत्सकारस्तदमृतं सद्ब्रह्म अमृतवाचकत्वादमृत एव
कारस्तकारान्तो निर्दिष्टः। अथ यत्ति तकारस्तन्मर्त्यम्। अथ यद्यमक्षरं तेना-
रेणामृतमर्त्याख्ये पूर्वे उभे अक्षरे यच्छति नियमयति वशीकरोत्यात्मनेत्यर्थः।
यस्मादनेन यमित्येतेनोभे यच्छति तस्माद्यम्। संयते इव ह्येतेन यमा लक्ष्येते।
ह्मनामाक्षरस्यापि इदममृतत्वादिधर्मवत्त्वं महाभाग्यं किमुत नामवतः, इत्यु-
स्यत्वाय स्तूयते ब्रह्म नामनिर्वचनेन। एवं नामवतो वेत्तैवंवित्। अहरहर्वा
वंवित्स्वर्गं लोकमेतीत्युक्तार्थम्॥ इति तृतीयः खंडः॥ ८.३.—

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैतं सेतुमहो-
त्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो
निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः॥१॥**

अथ य आत्मेति। उक्तलक्षणो यः संप्रसादस्तस्य स्वरूपं वक्ष्यमाणैरुक्तैर-
रैश्च गुणैः पुनः स्तूयते, ब्रह्मचर्यसाधनसंबंधार्थम्। य एष यथोक्तलक्षण
ात्मा स सेतुरिव सेतुः। विधृतिर्विधरणः। अनेन हि सर्वं जगत् वर्णाश्रमादि-
क्रियाकारकफलादिभेदनियमैः कर्तुरनुरूपं विदधता विधृतम्। अध्रियमाणं ह्यीश्व-
णेदं विश्वं विनश्येद्यतः तस्मात्स सेतुर्विधृतिः। किमर्थं स सेतुरित्याह— एषां
[रादीनां लोकानां कर्तृकर्मफलाश्रयाणामसंभेदायाविदारणाय अविनाशायेत्येतत्।
किंविशिष्टश्चासौ सेतुरित्याह— नैतं सेतुमात्मानमहोरात्रे सर्वस्य जनिमतः परि-
च्छेदके सती नैतं तरतः। यथान्ये संसारिणः कालेन अहोरात्रादिलक्षणेन परि-
च्छेद्या, न तथायं कालपरिच्छेद्य इत्यभिप्रायः। 'यस्मादर्वाक्संवत्सरोऽहोभिः
रिवर्तते' इति श्रुत्यंतरात्। अत एवैनं न जरा तरति न प्राप्नोति। तथा न
ृत्युर्न शोको न सुकृतं न दुष्कृतं सुकृतदुष्कृते धर्माधर्मौ। प्राप्तिरत्र तरणशब्दे-
ाभिप्रेता नातिक्रमणम्। कारणं ह्यात्मा। न शक्यं हि कारणातिक्रमणं कर्तुं
ार्येण। अहोरात्रादि च सर्वं सतः कार्यम्। अन्येन ह्यन्यस्य प्राप्तिरतिक्रमणं
ा क्रियेत, नतु तेनैव तस्य। न हि घटेन मृत्प्राप्यतेऽतिक्रम्यते वा। यद्यपि
र्वं 'य आत्मापहतपाप्मा' इत्यादिना पाप्मादिप्रतिषेध उक्त एव, तथापीहायं
वशेषो, न तरतीति प्राप्तिविषयत्वं प्रतिषिध्यते। तत्राविशेषेण जराद्यभावमात्र-

मुक्तम् । अहोरात्राद्या उक्ता अनुक्ताश्चान्ये सर्वे पाप्मान उच्यन्ते । अतो
दात्मनः सेतोर्निवर्तन्तेऽप्राप्यैवेत्यर्थः । अपहतपाप्मा ह्येष ब्रह्मैव लोको
लोक उक्तः ॥

**तस्माद्वा एतं सेतुं तीर्त्वान्धः सन्ननंधो भवति विद्धः सन्नविद्धो भ पतापी सन्ननुपतापी भवति तस्माद्वा एतं सेतुं तीर्त्वापि नक्तमहरेव निष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥१॥**

यस्माच्च पाप्मकार्यमांध्यादि शरीरवतः स्यान्न त्वशरीरस्य, तस्माद्वा मात्मानं सेतुं तीर्त्वा प्राप्यानंधो भवति देहवत्त्वे पूर्वमंधोऽपि सन् । तथा सन्देहवत्त्वे स देहवियोगे सेतुं प्राप्याविद्धो भवति । तथोपतापी रोगाद्युपत न्सन्ननुपतापी भवति । किंच यस्मादहोरात्रे न स्तः सेतौ, तस्माद्वा एतं तीर्त्वा प्राप्य नक्तमपि तमोरूपं रात्रिरपि सर्वमहरेवाभिनिष्पद्यते । विज्ञप्ति ज्योतिःस्वरूपं अहरिवाहः सदैकरूपं विदुषः संपद्यत इत्यर्थः । सकृद्विभातः विभातः सदैकरूपः स्वेन रूपेणैव ब्रह्मलोकः ॥

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविंदन्ति तेषामेवैष ब्रह्मलोक सर्वेषु लोकेषु कामचारो भवति ॥२॥ इति चतुर्थः खंडः ॥**

तत्तत्रैवं सत्येतं यथोक्तं ब्रह्मलोकं ब्रह्मचर्येण स्त्रीविषयतृष्णात्यागेन श न्चार्योपदेशमनुविंदन्ति स्वात्मसंवेद्यतामापादयन्ति ये तेषामेव ब्रह्मचर्यसाधन ब्रह्मविदामेष ब्रह्मलोकः, नान्येषां स्त्रीविषयसंपर्कजाततृष्णानां ब्रह्मविदामपील तेषां सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् । तस्मात्परममेतत्साधनं ब्र ब्रह्मविदामित्यभिप्रायः ॥ इति चतुर्थः खंडः ॥ ८.४

य आत्मा सेतुत्वादिगुणैः स्तुतः तत्प्राप्तये ज्ञानसहकारिसाधनान्तरं न्चर्याख्यं विधातव्यमित्याह । यज्ञादिभिश्च तत्स्तौति कर्तव्यार्थम्—

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञा विंदतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वात्मान विंदते ॥१॥**

अथ यद्यज्ञ इत्याचक्षते लोके परमपुरुषार्थसाधनं कथयन्ति शि तद्ब्रह्मचर्यमेव । यज्ञस्यापि यत्फलं तद्ब्रह्मचर्यवाँल्लभते, अतो यज्ञोऽपि ब्रह्म मेवेति प्रतिपत्तव्यम् । कथं ब्रह्मचर्यं यज्ञ इत्याह— ब्रह्मचर्येणैव हि यस

स तं ब्रह्मलोकं यज्ञस्यापि पारंपर्येण फलभूतं विंदते लभते ततो यज्ञोऽपि
ब्रमेवेति । यो ज्ञाता इत्यक्षरानुवृत्तेर्यज्ञो ब्रह्मचर्यमेव । अथ यदिष्टमित्या-
ब्रह्मचर्यमेव तत् । कथम् । ब्रह्मचर्येणैव साधनेन तमीश्वरमिष्ट्वा पूजयित्वा
णामात्मविषयां कृत्वा तमात्मानमनुविंदते । एषणादिष्टमपि ब्रह्मचर्यमेव ॥

**अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्म-
ां विंदतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवात्मान-
द्य मनुते ॥२॥**

अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तत्तथा सतः परस्मादात्मन
स्त्राणं रक्षणं ब्रह्मचर्यसाधनेन विंदते । अतः सत्त्रायणशब्दमपि ब्रह्मचर्य-
त् । अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तत्, ब्रह्मचर्येणैव साधनेन
सन्नात्मानं शास्त्राचार्याभ्यामनुविद्य पश्चान्मनुते ध्यायति । अतो मौनशब्द-
[ मौनशब्दोऽपि ? ] ब्रह्मचर्यमेव ॥

**अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति
ह्मचर्येणानुविंदतेऽथ यदरण्यायनमित्याक्षते ब्रह्मचर्यमेव तदरश्च ह वै
र्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयं सरस्तदश्वत्थः सोम-
स्तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयम् ॥३॥**

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत् । यमात्मानं ब्रह्मचर्येणा
ते स एष ह्यात्मा ब्रह्मचर्यसाधनवतो न नश्यति, तस्मादनाशकायनमपि
र्यमेव । अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत् । अरण्यशब्दयोः
योः ब्रह्मचर्यवतोऽयनात् अरण्यायनं ब्रह्मचर्यम् । यो ज्ञानाद्यज्ञ एषणादिष्टं
णात्सत्त्रायणं मननान्मौनं अनशनादनाशकायनं अरण्ययोर्गमनादरण्या-
त्यादिभिर्महद्भिः पुरुषार्थसाधनैः स्तुतत्वाद्ब्रह्मचर्यं परमं ज्ञानस्य सहकारि-
ं साधनमित्यतो ब्रह्मविदा यत्नतो रक्षणीयमित्यर्थः । तत्तत्र हि ब्रह्मलोके
र ह वै प्रसिद्धो ण्यश्चार्णवौ समुद्रौ समुद्रोपमे वा सरसी तृतीयस्यां भुवमंत-
चापेक्ष्य तृतीया द्यौस्तस्यां तृतीयस्यामितोऽस्माल्लोकादारभ्य गण्यमानायां
। तत्तत्रैव चैरमिरा अन्नं तन्मय ऐरो मंडस्तेन पूर्णमैरं मदीयं तदुपयोगिनां
रं हर्षोत्पादकं सरः । तत्रैव चाश्वत्थो वृक्षः सोमसवनो नामतः सोमोऽमृतं
स्रवोऽमृतस्रव इति वा । तत्रैव च ब्रह्मलोके ब्रह्मचर्यसाधनरहितैः ब्रह्मचर्य-

साधनवद्भ्योऽन्यैर्न जीयत इत्यपराजिता नाम पूः पुरी ब्रह्मणो हिरण्यगर्भस्य ब्रह्मणा च प्रभुणा विशेषेण मितं निर्मितं तच्च हिरण्मयं सौवर्णं प्रभुविमितं मंडपमिति वाक्यशेषः ॥

**तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविंदन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥४॥**

तत्तत्र ब्रह्मलोके एतावर्णवौ यावरण्याख्यावुक्तौ ब्रह्मचर्येण साधनेनानुविंदन्ति ये तेषामेवैष यो व्याख्यातो ब्रह्मलोकः । तेषां च ब्रह्मचर्यसाधनवतां ब्रह्मविदां सर्वेषु लोकेषु कामचारो भवति । नान्येषामब्रह्मचर्यपराणां बाह्यविषयासक्तबुद्धीनां कदाचिदपीत्यर्थः ।

नन्वत्र 'त्वमिंद्रस्त्वं यमस्त्वं वरुण' इत्यादिभिर्यथा कश्चित्स्तूयते महार्हः, एवमिष्टादिभिः शब्दैर्न स्त्र्यादिविषयतृष्णानिवृत्तिमात्रं स्तुत्यर्हं, किं तर्हि, ज्ञानस्य मोक्षसाधनत्वात्तदेवेष्टादिभिः स्तूयत इति केचित् । न । स्त्र्यादिबाह्यविषयतृष्णापहृतचित्तानां प्रत्यगात्मविवेकविज्ञानानुपपत्तेः । 'परांचि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्' इत्यादिश्रुतिस्मृतिशतेभ्यः । ज्ञानसहकारिकारणं स्त्र्यादिविषयतृष्णानिवृत्तिसाधनं विधातव्यमेवेति युक्तैव तत्स्तुतिः । ननु च यज्ञादिभिः स्तुतं ब्रह्मचर्यमिति यज्ञादीनां पुरुषार्थसाधनत्वं गम्यते । सत्यं गम्यते, न त्विह ब्रह्मलोकं प्रति यज्ञादीनां साधनत्वमभिप्रेत्य यज्ञादिभिर्ब्रह्मचर्यं स्तूयते । किं तर्हि, तेषां प्रसिद्धं पुरुषार्थसाधनत्वमपेक्ष्य । यथा इंद्रादिभी राजा न तु यत्रेंद्रादीनां व्यापारस्तत्रैव राज्ञ इति, तद्वत् ॥

य इमेऽर्णवादयो ब्राह्मलौकिकाः संकल्पजाश्च पित्रादयो भोगाः, ते किं पार्थिवा आप्याश्च यथेह लोके दृश्यन्ते तद्वदर्णववृक्षपूःस्वर्णमंडपानि, आहोस्विन्मानसप्रत्ययमात्राणीति । किंचातः, यदि पार्थिवा आप्याश्च स्थूलाः स्युर्हृद्याकाशे समाधानानुपपत्तिः । पुराणे च मनोमयानि ब्रह्मलोके शरीरादीनीति वाक्यं विरुध्येत । "अशोकमहिमम" इत्याद्याश्च श्रुतयः । ननु समुद्राः सरितः सरांसि वाप्यः कूपा यज्ञा वेदा मंत्रादयश्च मूर्तिमन्तो ब्रह्माणमुपतिष्ठन्ते इति मानसत्वे विरुध्येत पुराणस्मृतिः । न । मूर्तिमत्त्वे प्रसिद्धरूपाणामेव तत्र गमनानुपपत्तेः । तस्मात्प्रसिद्धमूर्तिव्यतिरेकेण सागरादीनां मूर्त्यंतरं सागरादिभिरुपात्तं ब्रह्मलोकगंतृ कल्पनीयम् । तुल्यायां च कल्पनायां यथाप्रसिद्धा एव मानस्य आकारवत्यः

;स्त्र्याद्या मूर्तयो युक्ताः कल्पयितुं, मानसदेहानुरूप्यसंबंधोपपत्तेः । दृष्टा हि
ानस्यः एवाकारवत्यः पुंस्त्र्याद्या मूर्तयः स्वप्ने । ननु ता अनृता एव । 'त इमे
त्याः कामा' इति श्रुतिस्तथा सति विरुध्येत । न । मानसप्रत्ययस्य सत्त्वो-
पत्तेः । मानसा हि प्रत्ययाः स्त्रीपुरुषाद्याकाराः स्वप्ने दृश्यन्ते । ननु जाग्रद्वासना-
पाः स्वप्नदृश्या न तु तत्र स्त्र्यादयः स्वप्ने विद्यन्ते । अत्यल्पमिदमुच्यते ।
ाग्रद्विषया अपि मानसप्रत्ययाभिनिर्वृत्ता एव, सदीक्षाभिनिर्वृत्ततेजोबन्नमयत्वात्
ाग्रद्विषयाणाम् । संकल्पमूला हि लोका इति चोक्तं 'समक्लृपतां द्यावापृथिवी'
त्यत्र । सर्वश्रुतिषु च प्रत्यगात्मन उत्पत्तिः प्रलयश्च तत्रैव स्थितिश्च 'यथा वा
रा नाभौ' इत्यादिनोच्यते । तस्मान्मानसानां बाह्यानां च विषयाणां इतरे-
रकार्यकारणत्वं इष्यते एव बीजांकुरवत् । यद्यपि बाह्याः एव मानसाः
ानसा एव च बाह्या, नानृतत्वं तेषां कदाचिदपि स्वात्मनि भवति । ननु
वप्ने दृष्टाः प्रतिबुद्धस्यानृता भवन्ति विषयाः । सत्यमेव । जाग्रद्बोधापेक्षं तु
दनृतत्वं न स्वतः । तथा स्वप्नबोधापेक्षं च जाग्रद्दृष्टविषयानृतत्वं न स्वतः ।
वेशेषाकारमात्रं तु सर्वेषां मिथ्याप्रत्ययनिमित्तमिति वाचारंभणं विकारो नामधे-
मनृतं त्रीणि रूपाणीत्येव सत्यम् । तान्यप्याकारविशेषतोऽनृतं स्वतः सन्मात्र-
पतया सत्यम् । प्राक्सदात्मप्रतिबोधात्स्वविषयेऽपि सर्वं सत्यमेव स्वप्नदृश्या
वेति न कश्चिद्विरोधः । तस्मान्मानसा एव ब्राह्मलौकिका अरण्यादयः संकल्प-
ाश्च पित्रादयः कामाः । बाह्यविषयभोगवत् अशुद्धिरहितत्वात् शुद्धसत्त्वसंक-
पजन्या इति निरतिशयसुखाः सत्याश्चेश्वराणां भवन्तीत्यर्थः । सत्सत्यात्मप्रति-
धेऽपि रज्ज्वामिव कल्पिताः सर्पादयः सदात्मस्वरूपतामेव प्रतिपद्यन्ते इति
दात्मना सत्या एव भवन्ति ॥ इति पंचमः खंडः ॥    ८.५.—

यस्तु हृदयपुंडरीकगतं यथोक्तगुणविशिष्टं ब्रह्म ब्रह्मचर्यादिसाधनसंपन्नः
प्रक्तबाह्यविषयानृततृष्णः सन्नुपास्ते तस्येयं मूर्धन्यया नाड्या गतिर्वक्तव्येति
ाडीखंड आरभ्यते—

**अथ या एता हृदयस्य नाड्यस्ताः पिंगलस्याणिम्नस्तिष्ठन्ति शुक्लस्य ोलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिंगल एष शुक्ल एष नील ुष पीत एष लोहितः ॥१॥**

अथ या एता वक्ष्यमाणा हृदयस्य पुंडरीकाकारस्य ब्रह्मोपासनस्थानस्य

संबंधिन्यो नाड्यो हृदयमांसपिंडात्सर्वतो विनिःसृता आदित्यमंडलादिव रश्‍
ताश्चैताः पिंगलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदा
एव तिष्ठन्ति वर्तन्त इत्यर्थः। तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य
रसस्य पूर्णा इति सर्वत्राध्याहार्यम्। सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृ
कफेनाल्पेन संपर्कात्पिंगलं भवति सौरं तेजः पित्ताख्यम्। तदेव च वातभूयस
नीलं भवति। तदेव च कफभूयस्त्वाच्छुक्लम्। कफेन समतायां पीतम्। शोणि
बाहुल्येन लोहितम्। वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः कथं भवन्तीति। श्रु
त्वाह— आदित्यसंबंधादेव तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा इति
कथम्। असौ वा आदित्यः पिंगलो वर्णत एष आदित्यः शुक्लोऽप्येष नील
पीत एष लोहित आदित्य एव॥

**तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवै आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रताय ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता**

तस्याध्यात्मं नाडीभिः कथं संबंध इत्यत्र दृष्टान्तमाह— तत्तत्र य
लोके महान्विस्तीर्णः पंथा महापथ आततो व्याप्त उभौ ग्रामौ गच्छतीमं
संनिहितममुं च विप्रकृष्टं दूरस्थमेवं यथा दृष्टान्तो महापथ उभौ ग्रामौ प्रवि
एवमेवैता आदित्यस्य रश्मय उभौ लोकावमुं चादित्यमंडलं, इमं च पु
गच्छन्त्युभयत्र प्रविष्टाः। यथा महापथः। कथम्। अमुष्मादादित्यमंडलात्प्र
यन्ते संतता भवन्ति। ता अध्यात्ममासु पिंगलादिवर्णासु यथोक्तासु ना
सृप्ता गताः प्रविष्टा इत्यर्थः। आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः संतानभू
सत्यस्तेऽमुष्मिन्। रश्मीनामुभयलिंगत्वात्ते इत्युच्यते॥

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु तदा ना सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवति**

तत्तत्रैवं सति यत्र यस्मिन्काले एतत्स्वपनमयं जीवः सुप्तो भवति
स्वापस्य द्विप्रकारत्वाद्विशेषणं समस्त इति। उपसंहृतसर्वकरणवृत्तिरित्येतत्
अतो बाह्यविषयसंपर्कजनितकालुष्याभावात् सम्यक् प्रसन्नः संप्रसन्नो भवति
अत एव स्वप्नं विषयाकाराभासं मानसं स्वप्नप्रत्ययं न विजानाति नानुभव
त्यर्थः। यदैवं सुप्तो भवत्यासु सौरतेजःपूर्णासु यथोक्तासु नाडीषु तदा सृ

चेष्टो नाडीभिर्द्वारभूताभिः हृदयाकाशं गतो भवतीत्यर्थः । न ह्यन्यत्र सत्संपत्तेः प्रादर्शनमस्तीति सामर्थ्यान्नाडीष्विति सप्तमी तृतीयया परिणम्यते । तं सता ग्नं न कश्चन न कश्चिदपि धर्माधर्मरूपः पाप्मा स्पृशतीति स्वरूपावस्थितत्वा- द्रा आत्मनः । देहेंद्रियविशिष्टं हि सुखदुःखकार्यप्रदानेन पाप्मा स्पृशतीति, तु सत्संपन्नं स्वरूपावस्थं कश्चिदपि पाप्मा स्प्रष्टुमुत्सहते । अविषयत्वात् । न्यो ह्यन्यस्य विषयो भवति न त्वन्यत्वं केनचित्कुतश्चिदपि सत्संपन्नस्य । रूपप्रच्यवनं त्वात्मनो जाग्रत्स्वप्नावस्थां प्रति गमनं बाह्यविषयप्रतिबोधे अवि- कामकर्मबीजस्य ब्रह्मविद्याहुताशादाहनिमित्तमित्यवोचाम षष्ठ एव । तदिहापि ञेतव्यम् । यदैवं सुप्तः सौरेण तेजसा हि नाड्यंतर्गतेन सर्वतः संपन्नो व्याप्तो वति । अतो विशेषेण चक्षुरादिनाडीद्वारैः बाह्यविषयभोगायाप्रसृतानि करणा- ्स्य तदा भवन्ति । तस्मादयं करणानां निरोधात्स्वात्मन्येवावस्थितः स्वप्नं न जानातीति युक्तम् ॥

अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि ं जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति ताव- ज्जानाति ॥४॥

तत्रैवं सति अथ यत्र यस्मिन्कालेऽबलिमानमबलभावं देहस्य रोगादि- ्मित्तं जरादिनिमित्तं वा कृशीभावमेतन्नयनं नीतः प्रापितो देवदत्तो भवति मूर्षुर्यदा भवतीत्यर्थः । तमभितः सर्वतो वेष्टयित्वासीना ज्ञातय आहुर्जानासि ं तव पुत्रं जानासि मां पितरं चेत्यादि । स मुमूर्षुर्यावदस्माच्छरीरादनुत्क्रा- ्तोऽनिर्गतो भवति तावत्पुत्रादीञ्जानाति ॥

अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ोमिति वा होद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु ोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥५॥

अथ यत्र यदा, एतत्क्रियाविशेषणमिति, अस्माच्छरीरादुत्क्रामति । अथ दैतैरेव यथोक्ताभी रश्मिभिरूर्ध्वमाक्रमते यथाकर्मजितं लोकं प्रत्यविद्वान् । तरस्तु विद्वान्यथोक्तसाधनसंपन्नः स ओमित्योंकारेण आत्मानं ध्यायन्यथापूर्वं ा हैव, उद्वोर्ध्वं वा विद्वांश्चेत् इतरस्तिर्यङ्वेत्यभिप्रायः । मीयते प्रमीयते गच्छ- ीत्यर्थः । स विद्वानुत्क्रमिष्यन्यावत्क्षिप्येन्मनो यावता कालेन मनसः क्षेपः स्या-

त्तावता कालेनादित्यं गच्छति प्राप्नोति क्षिप्रं गच्छतीत्यर्थः। न तु तावतैव का नेति विवक्षितम्। किमर्थमादित्यं गच्छतीत्युच्यते— एतद्वै खलु प्रसिद्धं ब्रह्मर कस्य द्वारं य आदित्यः, तेन द्वारभूतेन ब्रह्मलोकं गच्छति विद्वान्। अतो विदु प्रपदनं, प्रपद्यते ब्रह्मलोकमनेन द्वारेणेति प्रपदनम्। निरोधनं निरोधोऽस्म दादित्यादविदुषां भवतीति निरोधः। सौरेण तेजसा देह एव निरुद्धाः सन मूर्धन्यया नाड्या नोत्क्रमन्त एवेत्यर्थः। 'विष्वङ्ङन्या' इति श्लोकात्॥

तदेष श्लोकः। **शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनि सृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रम भवन्ति ॥६॥ इति षष्ठः खंडः ॥**

तदेतास्मिन्यथोक्तेऽर्थे एष श्लोको मंत्रो भवति। शतं चैका चैकोत्तरशतं नाड हृदयस्य मांसपिंडभूतस्य संबंधिन्यः प्रधानतो भवन्ति। आनंत्याद्देहनाडीनाम् तासामेका मूर्धानमभिनिःसृता विनिर्गता। तयोर्ध्वमायन्गच्छन्नमृतत्वममृ भावमेति। विष्वङ्नानागतयस्तिर्यग्विसर्पिण्य ऊर्ध्वगाश्चान्या नाड्यो भवा संसारगमनद्वारभूताः, न त्वमृतत्वाय। किं तर्हि, उत्क्रमण एवोत्क्रान्त्यर्थमे भवन्तीत्यर्थः। द्विरभ्यासः प्रकरणसमाप्त्यर्थः॥ इति षष्ठः खंडः॥ ८.६.–

'अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वे रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म' इत्युक्तम्। त कोऽसौ संप्रसादः, कथं वा तस्याधिगमो यथा सोऽस्माच्छरीरात्समुत्थाय प ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते? येन स्वरूपेणाभिनिष्पद्यते स किंलक्ष आत्मा? संप्रसादस्य च देहसंबंधीनि पररूपाणि ततो यदन्यत्कथंस्वरूपम्? इ एतेऽर्था वक्तव्या इत्युत्तरो ग्रंथ आरभ्यते। आख्यायिका तु विद्याग्रहणसंप्रदा विधिप्रदर्शनार्था विद्यास्तुत्यर्था च, राजसेवितं पानीयमितिवत्।

**य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोक नाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापति रुवाच ॥१॥**

य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपास सत्यकामः सत्यसंकल्पः। यस्योपासनायोपलब्ध्यर्थं हृदयपुंडरीकमभिहितं यस्मि

कामाः समाहिताः सत्या अनृतापिधाना, यदुपासनसहभावि ब्रह्मचर्यं साधनक्तं उपासनफलभूतकामप्रतिपत्तये च मूर्धन्यया नाड्या गतिरभिहिता, सोऽन्वेष्यः शास्त्राचार्योपदेशैर्ज्ञातव्यः स विशेषेण ज्ञातुमेष्टव्यो विजिज्ञासितव्यः स्वसंयतामापादयितव्यः । किं तस्यान्वेषणाद्विजिज्ञासनाच्च स्यादित्युच्यते— स र्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्योदेशेनान्विष्य विजानाति स्वसंवेद्यतामापादयति । तस्यैतत्सर्वलोककामावाप्तिः र्वात्मता फलं भवतीति ह किल प्रजापतिरुवाच । अन्वेष्टव्यो विजिज्ञासितव्य ते चैष नियमविधिरेव नापूर्वविधिः । एवमन्वेष्टव्यो विजिज्ञासितव्य इत्यर्थः । ष्टार्थत्वादन्वेषणविजिज्ञासनयोः । दृष्टार्थत्वं च दर्शयिष्यति 'नाहमत्र भोग्यं श्यामि' इत्यनेनासकृत् । पररूपेण च देहादिधर्मैः अवगम्यमानस्यात्मनः स्वरूधिगमे विपरीताधिगमनिवृत्तिर्दृष्टं फलमिति नियमार्थतैवास्य विधेर्युक्ता, न ग्निहोत्रादीनामिव अपूर्वविधित्वमिह संभवति ॥

**तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो मात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानितींद्रो हैव देवामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापसकाशमाजग्मतुः ॥२॥**

तद्धोभये इत्याद्याख्यायिकाप्रयोजनमुक्तम् । तद्ध किल प्रजापतेर्वचनं उये देवासुरा देवाश्चासुराश्च देवासुरा अनु परंपरागतं स्वकर्णगोचरापन्नमनुबुबुरेऽनुबुद्धवन्तः । ते चैतत्प्रजापतिवचो बुद्ध्वा किमकुर्वन्नित्युच्यते—ते होचुकवन्तोऽन्योन्यं देवाः स्वपरिषद्यसुराश्च, हंत यद्यनुमतिर्भवतां प्रजापतिनोक्तं मात्मानमन्विच्छामोऽन्वेषणं कुर्मो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति र्वांश्च कामान् । इत्युक्त्वेंद्रो हैव राजेव स्वयं देवानामितरान्देवांश्च भोगपच्छदं च सर्वं स्थापयित्वा शरीरमात्रेणैव प्रजापतिं प्रत्याभिप्रवव्राज प्रगतवांथा विरोचनोऽसुराणाम् । विनयेन गुरवोऽभिगंतव्या इत्येतद्दर्शयति । त्रैलोयराज्याच्च गुरुतरा विद्येति । यतो देवासुरराजौ महार्हभोगार्हौ सन्तौ तथा रुमभ्युपगतवन्तौ । तौ ह किलासंविदानावेवान्योन्यं संविदमकुर्वाणौ विद्याफलं त्यन्योन्यमीर्ष्यां दर्शयन्तौ समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशमाग्मतुरागतवन्तौ ॥

**तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमि च्छन्तावबास्तमिति तौ होचतुर्य आत्मापहतपाप्मा विजरो विमृत्युर्विशो विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञा तव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विज नातीति भगवतो वचो वेदयन्ते तमिच्छन्ताववास्तमिति ॥३॥**

तौ ह गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यमूषतुरुषितवन्त अभिप्रायज्ञः प्रजापतिस्तावुवाच— किमिच्छन्तौ किं प्रयोजनमभिप्रेत्य इच्छन्त ववास्तमुषितवन्तौ युवामिति । इत्युक्तौ तौ होचतुः— य आत्मेत्यादि भगव वचो वेदयन्ते शिष्टा अतस्तमात्मानं ज्ञातुमिच्छन्ताववास्तामिति । यद्यपि प्रा जापतेः समीपागमनादन्योन्यमीर्ष्यायुक्तावभूतां तथापि विद्याप्राप्तिप्रयोजनगौ वात् त्यक्तरागद्वेषमोहेर्ष्यादिदोषावेव भूत्वोषतुर्ब्रह्मचर्यं प्रजापतौ । तेनेदं प्रख्य पितमात्मविद्यागौरवम् ॥

**तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति ह वाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमाद कतम एष इत्येष उ एवैषु सर्वेष्वंतेषु परिख्यायत इति होवाच ॥४॥ इ सप्तमः खंडः ॥**

तावेवं तपस्विनौ शुद्धकल्मषौ योग्यावुपलक्ष्य प्रजापतिरुवाच ह— एषोऽक्षिणि पुरुषो निवृत्तचक्षुर्भिर्मृदितकषायैर्दृश्यते योगिभिर्द्रष्टा, एष आत्म पहतपाप्मादिगुणो, यमवोचं पुराहं, यद्विज्ञानात्सर्वलोककामावाप्तिः, एतदम भूमाख्यमत एवाभयं, अत एव ब्रह्म वृद्धतममिति । अथैतत्प्रजापतिनोक्तमक्षि पुरुषो दृश्यत इति वचः श्रुत्वा छायारूपं पुरुषं जगृहतुः । गृहीत्वा च दृढीक णाय प्रजापतिं पृष्टवन्तौ । अथ योऽयं हे भगवोऽप्सु परिख्यायते परि समंत ज्ज्ञायते, यश्चायमादर्शे आत्मनः प्रतिबिंबाकारः परिख्यायते खड्गादौ च, कत एष एषां भगवद्भिरुक्तः, किंवैक एव सर्वेष्विति । एवं पृष्टः प्रजापतिरुवाच- एष उ एव यश्चक्षुषि द्रष्टा मयोक्त इति । एतन्मनसि कृत्वैषु सर्वेष्वंतेषु मध्ये परिख्यायत इति होवाच ॥

ननु कथं युक्तं शिष्ययोर्विपरीतग्रहणमनुज्ञातुं प्रजापतेः विगतदोषस्य चार्यस्य सतः । सत्यमेवं, नानुज्ञातम् । कथम् , आत्मन्यध्यारोपितपांडित्यम

बोद्धृत्वौ हि इंद्रविरोचनौ तथैव च प्रथितौ लोके। तौ यदि प्रजापतिना
ौ युवां विपरीतग्राहिणावित्युक्तौ स्यातां ततस्तयोश्चित्ते दुःखं स्यात् तज्जनि-
च चित्तावसादात्पुनःप्रश्नश्रवणग्रहणावधारणं प्रत्युत्साहविघातः स्यात्। अतो
ाणीयौ शिष्याविति मन्यते प्रजापतिः। गृहीतां तावत्तदुदशरावदृष्टान्तेन
नेष्यामीति च। ननु न युक्तमेष उ एवेत्यनृतं वक्तुम्। न चानृतमुक्तम्।
म्। आत्मनोक्तोऽक्षिपुरुषो मनसि संनिहिततरः शिष्यगृहीताच्छायात्मनः।
षां चाभ्यंतरः 'सर्वान्तरः' इति श्रुतेः। तमेवावोचदेष उ एवेति। अतो न
नृतमुक्तं प्रजापतिना। तथा च तयोर्विपरीतग्रहणनिवृत्त्यर्थं ह्याह ॥ ८.७.—

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति ह्योदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ चतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः तिरूपमिति ॥१॥**

उदशरावे उदकपूर्णे शरावादौ आत्मानमवेक्ष्यानंतरं यत्तत्रात्मानं पश्यन्तौ विजानीथस्तन्मे मम प्रब्रूतमाचक्षीयाथामित्युक्तौ तौ ह तथैव उदश-वेऽवेक्षांचक्राते अवेक्षणं चक्रतुः। तथा कृतवन्तौ तौ ह प्रजापतिरुवाच किं श्यथ इति। ननु तन्मे प्रब्रूतमित्युक्ताभ्यामुदशरावेऽवेक्षणं कृत्वा प्रजापतये न विदितमिदमावाभ्यां न विदितमिति। अनिवेदिते चाज्ञानहेतौ ह प्रजापतिरुवाच्च पश्यथ इति, तत्र कोऽभिप्राय इति। उच्यते— नैव तयोरिदमावयोरवि-तमित्याशंकाऽभूत् छायात्मन्यात्मप्रत्ययो निश्चित एवासीत्। येन वक्ष्यति 'तौ शान्तहृदयौ प्रवव्रजतुः' इति। न ह्यनिश्चितेऽभिप्रेतार्थे प्रशान्तहृदयत्वमुप-द्यते। तेन नोचतुरिदमावाभ्यामविदितमिति। विपरीतग्राहिणौ च शिष्यावनु-क्षणीयाविति स्वयमेव पप्रच्छ किं पश्यथ इति। विपरीतनिश्चयापनयाय च क्ष्यति साध्वलंकृतौ इत्येवमादि। तौ होचतुः— सर्वमेवेदमावां भगव आ-मानं पश्याव आ लोमभ्यः आ नखेभ्यः प्रतिरूपमिति। यथैवावां हे भगवो ोमनखादिमन्तौ स्व एवमेवेदं लोमनखादिसहितं आवयोः प्रतिरूपमुदशरावे श्याव इति ॥

**तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरा-ऽवेक्षेथामिति तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षां-**

**चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥२॥**

तौ ह पुनः प्रजापतिरुवाच च्छायात्मनिश्चयापनयाय— साध्वलंकृ यथा स्वगृहे सुवसनौ महार्हवस्त्रपरिधानौ परिष्कृतौ च्छिन्नलोमनखौ च भू उदशरावे पुनरीक्षेथामिति । इह च नादिदेश यदज्ञातं तन्मे प्रब्रूतमिति । क पुनरनेन साध्वलंकारादि कृत्वोदशरावेऽवेक्षणेन तयोश्छायात्मग्रहोऽपनीतः स्यात साध्वलंकारसुवसनादीनामागंतुकानां छायाकरत्वमुदशरावे यथा शरीरसंबद्धानामे शरीरस्यापि च्छायाकरत्वं पूर्वं बभूवेति गम्यते । शरीरैकदेशानां च लोम नखादीनां नित्यत्वेनाभिप्रेतानामखंडितानां छायाकरत्वं पूर्वमासीत् । छिन्नेषु नैव लोमनखादिच्छाया दृश्यतेऽतो लोमनखादिवच्छरीरस्याप्यागमापायित्वं सिद्ध मित्युदशरावादौ दृश्यमानस्य तन्निमित्तस्य च देहस्यानात्मत्वं सिद्धम् । उदशर वादौ च्छायाकरत्वाद्देहसंबद्धालंकारादिवत् । न केवलमेतावदेतेन यावत्किंचिदात्म यत्वाभिमतं सुखदुःखरागद्वेषमोहादि च कादाचित्कत्वान्नखलोमादिवदनात्मे प्रत्येतव्यम् । एवमशेषमिथ्याग्रहापनयनिमित्ते साध्वलंकारादिदृष्टान्ते प्रजापतिनो श्रुत्वा तथा कृतवतोरपि च्छायात्मविपरीतग्रहो नापजगाम यस्मात्तस्मात्स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानौ इंद्रविरोचनावभूतामिति गम्यते । तौ पूर्ववदे दृढनिश्चयौ पप्रच्छ किं पश्यथ इति ॥

**तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स एवमेवेमौ भगवः साध्वलंकृतौ सुवसनौ परिष्कृतावित्येष आत्मेति होवा चैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥३॥**

तौ तथैव प्रतिपन्नौ यथैवेदमिति पूर्ववत्, यथा साध्वलंकारादिविशिष्ट आवां स्वः एवमेवेमौ छायात्मानाविति सुतरां विपरीतनिश्चयौ बभूवतुः । यस्या त्मनो लक्षणं 'य आत्मापहतपाप्मा' इत्युक्त्वा पुनस्तद्विशेषमन्विष्यमाणयोः 'य एषोऽक्षिणि पुरुषो दृश्यते' इति साक्षादात्मनि निर्दिष्टे तद्विपरीतग्रहापनयाय उद शरावसाध्वलंकारदृष्टान्तेऽप्यभिहिते आत्मस्वरूपबोधाद्विपरीतग्रहो नापगतः अतः स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानसामर्थ्याविति मत्वा यथाभिप्रेतमेवा त्मानं मनसि निधायैष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति प्रजापतिः पूर्व वत् । न तु तदभिप्रेतमात्मानम् । 'य आत्मा' इत्याद्यात्मलक्षणश्रवणेनाक्षिपुरुष श्रुत्या चोदशरावाद्युपपत्त्या च संस्कृतौ तावत् । मद्वचनं सर्वं पुनः पुनः स्मरतो

ाबंधक्षयाच्च स्वयमेवात्मविषये विवेको भविष्यतीति मन्वानः पुनर्ब्रह्मचर्यादेशे तयोश्चित्तदुःखोत्पत्तिं परिजिहीर्षन्कृतार्थबुद्धितया गच्छन्तावप्युपेक्षितवान्प्रजा- ः। तौ ह इंद्रविरोचनौ शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धी इत्यर्थः। न तु । एव, शमश्चित्तयोर्जातो विपरीतग्रहो विगतोऽभविष्यत्। प्रवव्रजतुर्गतवन्तौ ॥

**तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर दुपनिषदो भविष्यन्ति देवा वासुरा वा ते पराभविष्यन्तीति स ह शा- हृदय एव विरोचनोऽसुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाचात्मैवेह ्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाव- प्नोतीमं चामुं चेति ॥४॥**

एवं तयोर्गतयोरिंद्रविरोचनयो राज्ञोर्भोगासक्तयोः यथोक्तविस्मरणं स्यादि- शंकयाप्रत्यक्षं प्रत्यक्षवचनेन च चित्तदुःखं परिजिहीर्षुस्तौ दूरं गच्छन्तावन्वी- 'य आत्मापहतपाप्मा' इत्यादिवचनवदेतदप्यनयोः श्रवणगोचरत्वमेष्यतीति ोवाच प्रजापतिः— अनुपलभ्य यथोक्तलक्षणमात्मानमननुविद्य स्वात्मप्रत्यक्षं कृत्वा विपरीतनिश्चयौ च भूत्वा इंद्रविरोचनावेतौ व्रजतो गच्छेयाताम्। अतो ्र देवा वासुरा वा किं विशेषितेन, एतदुपनिषद आभ्यां या गृहीता आत्म- ्या सेयमुपनिषद्येषां देवानामसुराणां वा त एतदुपनिषदः एवंविज्ञाना एत- श्चया भविष्यन्तीत्यर्थः। ते किं? पराभविष्यन्ति श्रेयोमार्गात्पराभूता बहि- ा विनष्टा भविष्यन्तीत्यर्थः। स्वगृहं गच्छतोः सुरासुरराजयोर्योऽसुरराजः स शान्तहृदय एव सन्विरोचनोऽसुराञ्जगाम। गत्वा च तेभ्योऽसुरेभ्यः शरीरात्म- द्धेर्या उपनिषत्तामेतामुपनिषदं प्रोवाचोक्तवान्। देहमात्रमेवात्मा पित्रोक्तः ो। तस्मादात्मैव देह इह लोके महय्यः पूजनीयस्तथा परिचर्यः परिचरणीयः, ात्मानमेवेह लोके देहं महयन्परिचरंश्चोभौ लोकाववाप्नोतीमं चामुं च। इह- कपरलोकयोरेव सर्वे लोकाः कामाश्चान्तर्भवन्तीति राज्ञोऽभिप्रायः ॥

**तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणां ोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति संस्कुर्वन्त्येतेन ह्यमुं कं जेष्यन्तो मन्यन्ते ॥५॥ इति अष्टमः खंडः ॥**

तस्मात्तत्संप्रदायोऽद्याप्यनुवर्तत इतीह लोकेऽददानं दानमकुर्वाणमविभा- ़ीलमश्रद्दधानं सत्कार्येषु श्रद्धारहितं यथाशक्त्ययजमानमयजनस्वभावमाहुरा-

सुरः खल्वयं यत एवंस्वभावो बतेति खिद्यमाना आहुः शिष्टाः। असुराणां यस्मादश्रद्दधानतादिलक्षणैषोपनिषत्। तयोपनिषदा संस्कृताः सन्तः प्रेतस्य शा कुणपं भिक्षया गंधमाल्यान्नादिलक्षणया वसनेन वस्त्रादिनाच्छादनादिप्रकारे लंकारेण ध्वजपताकादिकरणेनेत्येवं संस्कुर्वन्ति। एतेन कुणपसंस्कारेणामुं प्रतिपत्तव्यं लोकं जेष्यन्तो मन्यन्ते ॥ इति अष्टमः खंडः ॥ ८.८.

**अथ हेंद्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नंधेऽधो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥१॥**

अथ ह किलेंद्रोऽप्राप्यैव देवान्देव्याऽक्रौर्यादिसंपदा युक्तत्वात् गुरोर्वचः पुनः पुनः स्मरन्नेव गच्छन्नेतद्वक्ष्यमाणं भयं स्वात्मग्रहणनिमित्तं ददर्श दृष्टवान्। उदशरावदृष्टान्तेन प्रजापतिना यदर्थो न्याय उक्तस्तदेकदेशो मघवतः प्रत्यभाद् बुद्धौ, येन च्छायात्मग्रहणे दोषं ददर्श। कथम्। यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते छायात्मापि साध्वलंकृतो भवति सुवसने च सुवसनः परिष्कृते परिष्कृतो यथा नखलोमादिदेहावयवापगमे छायात्मापि परिष्कृतो भवति नखलोमादिरहितो भवति, एवमेवायं छायात्माप्यस्मिञ्छरीरे नखलोमादिभिर्देहावयवैस्तस्य तुल्यत्वादंधे चक्षुषोऽपगमेऽन्धो भवति स्रामे स्रामः। स्रामः किलेकनेत्रः तस्यांधत्वेन गतत्वात्। चक्षुर्नासिका वा यस्य सदा स्रवति स स्रामः। परिवृक्णश्छिन्नहस्तश्छिन्नपादो वा। स्रामे परिवृक्णे वा देहे छायात्मापि तथा भवति तथास्य देहस्य नाशमन्वेष नश्यति। अतः नाहमत्र अस्मिंश्छायात्मदर्शने देहात्मदर्शने वा भोग्यं फलं पश्यामीति ॥

**स समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन्यच्छांतहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन्पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नंधेऽधो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥२॥**

एवं दोषं देहच्छायात्मदर्शनेऽध्यवस्य स समित्पाणिर्ब्रह्मचर्यं वस्तुं पुनरेयाय

ह प्रजापतिरुवाच—मघवन्यच्छान्तहृदयः प्राव्राजीः प्रगतवानसि विरोच-
साधं किमिच्छन्पुनरागम इति। विजानन्नपि पुनः पप्रच्छ इंद्राभिप्रायाभि-
क्तये 'यद्वेत्थ तेन मोपसीद' इति यद्वत्। तथा च स्वाभिप्रायं प्रकटमकरो-
व खल्वयमित्यादि। एवमेवेति चान्वमोदत प्रजापतिः॥

ननु तुल्येऽक्षिपुरुषश्रवणे देहच्छायामिंद्रोऽग्रहीदात्मेति देहमेव तु विरो-
ः। तत्किंनिमित्तम्? तत्र मन्यते। यथेंद्रस्य उदशरावादिप्रजापतिवचनं स्म-
देवानप्राप्तस्यैव आचार्योक्तबुद्ध्या छायात्मग्रहणं तत्र दोषदर्शनं चाभूत्।
तथा विरोचनस्य किं तर्हि, देह एवात्मदर्शनं, नापि तत्र दोषदर्शनं बभूव।
देव विद्याग्रहणसामर्थ्यप्रतिबंधदोषाल्पत्वबहुत्वापेक्षं इंद्रविरोचनयोश्छायात्मदे-
ग्रहणम्। इंद्रोऽल्पदोषत्वात् 'दृश्यते' इति श्रुत्यर्थमेव श्रद्दधानतया जग्राह,
रश्छायानिमित्तं देहं हित्वा श्रुत्यर्थं लक्षणया जग्राह प्रजापतिनोक्तोऽयमिति,
भूयस्त्वात्। यथा किल नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्म-
मिति च्छायानिमित्तं वास एवोच्यते न च्छाया तद्वदिति विरोचनाभिप्रायः।
चित्तगुणदोषवशादेव हि शब्दार्थावधारणं तुल्येऽपि श्रवणे ख्यापितं 'दाम्यत
दयध्वं' इति दकारमात्रश्रवणात् श्रुत्यंतरे। निमित्तान्यपि तदनुगुणान्येव
कारीणि भवन्ति॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसा-
णि द्वात्रिंशतं वर्षाणीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै
वाच ॥३॥ इति नवमः खंडः॥**

एवमेवैष मघवन्सम्यक्त्वयाऽवगतं, न च्छायात्मा, इत्युवाच प्रजापतिः।
मयोक्त आत्मा प्रकृत एतमेवात्मानं तु ते भूयः पूर्वं व्याख्यातमप्यनुव्याख्या-
मि। यस्मात्सकृद्व्याख्यातं दोषरहितानामवधारणविषयं प्राप्तमपि नाग्रहीः,
ः केनचिद्दोषेण प्रतिबद्धग्रहणसामर्थ्यस्त्वम्। अतस्तत्क्षपणाय वसापराणि
त्रिंशतं वर्षाणीत्युक्त्वा तथोषितवते क्षपितदोषाय तस्मै होवाच॥ इति
मः खंडः॥ ८.९.—

**य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्र-
ते स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदं
रिमंधं भवत्यनंधः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण**

दुष्यति ॥१॥

य आत्मापहतपाप्मादिलक्षणो 'य एषोऽक्षिणि' इत्यादिना स: । कोऽसौ ? य: स्वप्ने महीयमान: स्त्र्यादिभि: पूज्यमानश्चरति उ प्रभोगाननुभवतीत्यर्थ: । एष आत्मेति होवाचेत्यादि समानम् । स शान्तहृदय: प्रवव्राज । स हाप्राप्यैव देवान्पूर्ववदास्मिन्भयात्मनि कथम् । तदिदं शरीरं यद्यप्यंधं भवति, स्वप्नात्मा योऽनंध: स त्रामिदं शरीरमस्रामश्च स भवति । नैवैष स्वप्नात्मास्य देहस्य दो

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवै यन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्य स समित्पाणि: पुनरेयाय तं ह प्रजापतिरुवाच मघवन्यच्छां व्राजी: किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भग भवत्यनंध: स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं वि प्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येव क्षिति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वा णीति स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच ॥४ खंड: ॥

नाप्यस्य वधेन स हन्यते छायात्मवन्न चास्य स्राम्येण स्र भवति । यदध्यायादौ आगममात्रेणोपन्यस्तं 'नास्य जरयैतज्जी तदिह न्यायेनोपपादयितुमुपन्यस्तम् । न तावदयं छायात्मवद्देह घ्नन्ति त्वेवैनम् । एवशब्द इवार्थे । घ्नन्तीवैनं केचनेति द्रष्टव्यम् वेति । उत्तरेषु सर्वेष्विवशब्ददर्शनात् । नास्य वधेन हन्यत इ घ्नन्ति त्वेवेति चेत् । नैवम् । प्रजापतिं प्रमाणीकुर्वतोऽनृतवादित्वाप 'एतदमृतं' इत्येतत्प्रजापतिवचनं कथं मृषा कुर्यादिंद्रस्तं प्रमा च्छायापुरुषे प्रजापतिनोक्ते 'अस्य शरीरस्य नाशमन्वेष नश्यति' इ दधात्तथेहापि स्यात् । नैवम् । कस्मात् ? 'य एषोऽक्षिणि पुरुषो च्छायात्मा प्रजापतिनोक्त इति मन्यते मघवान् । कथम् । अपह पृष्टे यदि च्छायात्मा प्रजापतिनोक्त इति मन्यते, तदा कथं प्रज

य पुनः श्रवणाय समित्पाणिर्गच्छेत् ? जगाम च। तस्मान्न च्छायात्मा प्रजा-
तेनोक्त इति मन्यते। तथाच व्याख्यातं द्रष्टाक्षिणि दृश्यत इति। तथा विच्छा-
न्तीव विद्रावयन्तीव, तथाच पुत्रादिमरणनिमित्तमप्रियवेत्तेव भवति। अपि
स्वयमपि रोदितीव। नन्वप्रियं वेत्त्येव, कथं वेत्तेवेति। उच्यते— नामृता-
यत्ववचनानुपपत्तेः। 'ध्यायतीव' इति च श्रुत्यंतरात्। ननु प्रत्यक्षविरोध इति
त्। न। शरीरात्मत्वप्रत्यक्षवद्भ्रान्तिसंभवात्। तिष्ठतु तावदप्रियवेत्तेव न वेति।
हमत्र भोग्यं पश्यामि। स्वप्नात्मज्ञानेऽपीष्टं फलं नोपलभे इत्यभिप्रायः। एवमे-
न तवाभिप्रायेणेति वाक्यशेषः। आत्मनोऽमृताभयगुणवत्त्वस्य अभिप्रेतत्वात्।
रुक्तमपि न्यायतो मया यथावन्नावधारयति। तस्मात्पूर्ववदस्याद्यापि प्रतिबंध-
ारणमस्तीति मन्वानस्तत्क्षपणाय वसापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमित्यादि-
श प्रजापतिः। तथोषितवते क्षपितकल्मषायाह ॥ इति दशमः खंडः॥ —

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवा-
तदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवा-
तद्भयं ददर्श नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवे-
ानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥१॥
समित्पाणिः पुनरेयाय तं ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः
ाव्राजीः किमिच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एवं
प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो
भवति नाहमत्र भोग्यं पश्यामीति ॥२॥**

पूर्ववदेतं त्वेव त इत्याद्युक्त्वा तद्यत्रैतत्सुप्त इत्यादि व्याख्यातं वाक्यम्।
अक्षिणि यो द्रष्टा स्वप्ने च महीयमानश्चरति स एव सुप्तः समस्तः संप्रसन्नः स्वप्नं
न विजानात्येष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति स्वाभिप्रेतमेव। मघ-
ांस्तत्रापि दोषं ददर्श। कथम्। नाह नैव सुषुप्तस्थोऽप्यात्मा खल्वयं संप्रति
सम्यगिदानीं च आत्मानं जानाति नैवं जानाति। कथम्। अयमहमस्मीति नो
एवेमानि भूतानि चेति। यथा जाग्रति स्वप्ने वा। अतो विनाशमेव विनाश-
मेवेति पूर्ववत् द्रष्टव्यम्। अपीतोऽपिगतो भवति, विनष्ट इव भवतीत्यभिप्रायः।
ज्ञाने हि सति ज्ञातुः सद्भावोऽवगम्यते नासति ज्ञाने। न च सुषुप्तस्य ज्ञानं
दृश्यतेऽतो विनष्ट इवेत्यभिप्रायः। न तु विनाशमेवात्मनो मन्यतेऽमृताभयवच-

स्य प्रामाण्यमिच्छन् ॥

**एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पंच वर्षाणीति स हापराणि पंच वर्षाण्युवास तान्येकशतं संपेदुरेतत्तद्यदाहुरेकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥३॥ इति एकादशः खंडः ॥**

पूर्ववदेवमेवेत्युक्त्वा आह— यो मयोक्तस्त्रिभिः पर्यायैस्तमेवैतं नो एवान्यत्रैतस्मादात्मनोऽन्यं कंचन, किं तर्ह्येतमेव व्याख्यास्यामि। स्वल्पस्तु दोषस्तवावशिष्टः तत्क्षपणाय वसापराण्यन्यानि पंच वर्षाणीत्युक्तः स तथा चकार। तस्मै मृदितकषायादिदोषाय स्थानत्रयदोषसंबंधरहितमात्मनः स्वरूपं अपहतपाप्मत्वादिलक्षणं मघवते तस्मै होवाच। तान्येकशतं वर्षाणि संपेदुः संपन्नानि बभूवुः। तदाहुर्लोके शिष्टा— एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवासेति। तदेतत् द्वात्रिंशतमित्यादिना दर्शितमित्याख्यायिकातोऽपसृत्य श्रुत्योच्यते। एवं लोकेऽतदिंद्रत्वादपि गुरुतरमिंद्रेणापि महता यत्नेनैकोत्तरवर्षशतकृतायासेन प्राप्तमात्मज्ञानम्। अतो नातः परं पुरुषार्थान्तरमस्तीत्यात्मज्ञानं स्तौति ॥ इति एकादशः खंडः ॥

८.११.—

**मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥१॥**

मघवन्मर्त्यं वै मरणधर्मीदं शरीरम्। यन्मन्यसेऽक्ष्याधारादिलक्षणः संप्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति, शृणु तत्र कारणम्— यदिदं शरीरं वै यत्पश्यसि तदेतन्मर्त्यं विनाशि। तच्चात्तं मृत्युना ग्रस्तं सततमेव। कदाचिदेव म्रियत इति मर्त्यमित्युक्ते न तथा संत्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्ते, इति वैराग्यार्थं विशेष इत्युच्यते आत्तं मृत्युनेति। कथं नाम देहाभिमानतो विरक्तः सन्निवर्तेत इति। शरीरमित्यत्र सहेंद्रियमनोभिरुच्यते। तच्छरीरमस्य संप्रसादस्य त्रिस्थानतया गम्यमानस्यामृतस्य मरणादिदेहेंद्रियमनोधर्मवर्जितस्येत्येतत्, अमृतस्य इत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्य इति वचनं वाय्वादिवत्सावयवत्वमूर्तिमत्वे मा भूतामिति, आत्मनो भोगाधिष्ठानम्। आत्मनो वा सत ईक्षितुस्तेजोबन्नादिक्रमेणोत्पन्नमधिष्ठानम्। जीवरूपेण

वेश्य सदेवाधितिष्ठत्यस्मिन्निति वा अधिष्ठानम् । यस्येदमीदृशं नित्यमेव मृत्युग्रस्तं र्माधर्मजनितत्वात्प्रियाप्रियवदधिष्ठानं तदधिष्ठितस्तद्वान्सशरीरो भवति । अ- रीरस्वभावस्यात्मनः तदेवाहं शरीरं शरीरमेव चाहमित्यविवेकात्मभावः स- रीरत्वं, अत एव सशरीरः सन्नात्तो ग्रस्तः प्रियाप्रियाभ्याम् । प्रसिद्धमेतत् । स्य च न वै सशरीरस्य सतः प्रियाप्रिययोः बाह्यविषयसंयोगवियोगनिमित्तयोः ाह्यविषयसंयोगवियोगौ ममेति मन्यमानस्यापहतिर्विनाश उच्छेदः संततिरूप- र्नास्तीति । तं पुनर्देहाभिमानात् अशरीरस्वरूपविज्ञानेन निवर्तिताविवेकः ानमशरीरं सन्तं प्रियाप्रिये न स्पृशतः । स्पृशिः प्रत्येकं संबध्यत इति प्रियं न पृशत्यप्रियं न स्पृशतीति वाक्यद्वयं भवति । न म्लेच्छाशुच्यधार्मिकैः सह संभा- तेति यद्वत् । धर्माधर्मकार्ये हि ते, अशरीरता तु स्वरूपमिति तत्र धर्माधर्म- ारसंभवात्तत्कार्यभावो दूरत एवेत्यतो न प्रियाप्रिये स्पृशतः ॥

ननु यदि प्रियमप्यशरीरं न स्पृशतीति, यन्मघवतोक्तं सुषुप्तस्थो विनाश- ेवापीतो भवतीति, तदेवेहाप्यापन्नम् । नैष दोषः । धर्माधर्मकार्ययोः शरीर- ंबंधिनोः प्रियाप्रिययोः प्रतिषेधस्य विवक्षितत्वात् अशरीरं न प्रियाप्रिये स्पृशत ति । आगमापायिनोर्हि स्पर्शशब्दो दृष्टो, यथा शीतस्पर्श उष्णस्पर्श इति न चाग्नेरुष्णप्रकाशयोः स्वभावभूतयोरग्निना स्पर्श इति भवति । तथाग्नेः सवितुर्वा उष्णप्रकाशवत्स्वरूपभूतस्यानंदस्य प्रियस्यापि नेह प्रतिषेधः 'विज्ञानमानंदं ब्रह्म' 'आनंदो ब्रह्म' इत्यादिश्रुतिभ्यः । इहापि भूमैव सुखमित्युक्तत्वात् ॥

ननु भूम्नः प्रियस्यैकत्वेऽसंवेद्यत्वात्स्वरूपेणैव वा नित्यसंवेद्यत्वान्निर्विशेष- तेति नेंद्रस्य तदिष्टम् । 'नाह खल्वयं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि' इत्युक्तत्वात् । तद्धीन्द्रस्येष्टं यद्भूतानि चात्मानं च जानाति, न चाप्रियं किंचिद्वेत्ति, स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्येन ज्ञानेन । सत्यमेतदिष्टमिंद्रस्य इमानि भूतानि मत्तोऽन्यानि लोकाः कामाश्च सर्वे मत्तोऽन्येऽहमेषां स्वामीति । न त्वेतदिंद्रस्य हितम् । हितं चेंद्रस्य प्रजापतिना वक्तव्यम् । व्योमवदशरीरात्मतया सर्वभूत- लोककामात्मत्वोपगमेन या प्राप्तिस्तद्धितमिंद्राय वक्तव्यमिति प्रजापतिनाभि- प्रेतम् । न तु राज्ञो राज्याप्तिवदन्यत्वेन । तत्रैवं सति कं केन विजानीयादात्मै- कत्वे इमानि भूतान्ययमहमस्मीति । नन्वस्मिन्पक्षे 'स्त्रीभिर्वा यानैर्वा' 'स यदि

पितृलोककामः' 'स एकधा भवति' इत्याद्यैश्वर्यश्रुतयोऽनुपपन्नाः । न । सव
सर्वफलसंबंधोपपत्तेरविरोधात् । मृद इव सर्वघटकरककुंडाद्याप्तिः । ननु
त्मत्वे दुःखसंबंधोऽपि स्यादिति चेत् । न । दुःखस्याप्यात्मत्वोपगमादवि
आत्मन्यविद्याकल्पनानिमित्तानि दुःखानि रज्ज्वामिव सर्पादिकल्पनानिमि
सा चाविद्या अशरीरात्मैकत्वस्वरूपदर्शनेन दुःखनिमित्तोच्छिद्येति दुःख
शंका न संभवति । शुद्धसत्त्वसंकल्पनिमित्तानां तु कामानामीश्वरदेहसंबंध
भूतेषु मानसानां पर एव सर्वसत्त्वोपाधिद्वारेण भोक्तेति सर्वाविद्याकृतसं
राणां पर एवात्मा आस्पदं नान्योऽस्तीति वेदान्तसिद्धान्तः ॥

'य एषोऽक्षिणि पुरुषो दृश्यते' इति च्छायापुरुष एव प्रजापति
स्वप्नसुषुप्तयोश्चान्य एव, न परोऽपहतपाप्मत्वादिलक्षणो, विरोधादिति वे
न्यन्ते । च्छायाद्यात्मनां चोपदेशे प्रयोजनमाचक्षते । आदावेवोच्यमाने
दुर्विज्ञेयत्वात्परस्यात्मनः अत्यंतबाह्यविषयासक्तचेतसः अत्यंतसूक्ष्मवस
व्यामोहो मा भूदिति । यथा किल द्वितीयायां सूक्ष्मं चंद्रं दिदर्शयिषुर्वृक्ष
त्प्रत्यक्षमादौ दर्शयति पश्यामुमेष चंद्र इति, ततोऽन्यं ततोऽप्यन्यं गि
च चंद्रसमीपस्थमेष चंद्र इति, ततोऽसौ चंद्रं पश्यति, एवमेतत् 'य एषोः
इत्याद्युक्तं प्रजापतिना त्रिभिः पर्यायैर्न पर इति । चतुर्थे तु पर्याये देहा
त्समुत्थायाशरीरतामापन्नो ज्योतिःस्वरूपम् । यस्मिन्नुत्तमपुरुषे स्त्र्यादि
क्रीडन्नममाणो भवति स उत्तमः पुरुषः पर उक्त इति चाहुः ।

सत्यं, रमणीया तावदियं व्याख्या श्रोतुम् । नत्वर्थोऽस्य ग्रंथस्यैव
वति । कथम् । अक्षिणि पुरुषो दृश्यते इत्युपन्यस्य शिष्याभ्यां छा
गृहीते तयोस्तद्विपरीतग्रहणं मत्वा तदपनयायोदशरावोपन्यासः किं पश्य
च प्रश्नः साध्वलंकारोपदेशश्चानर्थकः स्यात् यदि च्छायात्मैव प्रजापतिन
दृश्यत इत्युपदिष्टः । किंच यदि स्वयमुपदिष्ट इति ग्रहणस्याप्यपन
वक्तव्यं स्यात् । स्वप्नसुषुप्तात्मग्रहणयोरपि तदपनयकारणं च स्वयं ब्रूया
चोक्तं तेन । तेन मन्यामहे नाक्षिणि च्छायात्मा प्रजापतिनोपदिष्टः । किं
दक्षिणि द्रष्टा चेत् दृश्यते इत्युपदिष्टः स्यात्तत इदं युक्तम् । एतं त्वेव ते
स्वप्नेऽपि द्रष्टुरेवोपदेशः । स्वप्ने न द्रष्टोपदिष्ट इति चेत् । न । 'अपि रे
'अप्रियवेत्तेव' इत्युपदेशात् । न च द्रष्टुरन्यः कश्चित्स्वप्ने महीयमानश्चरति

यं पुरुषः स्वयंज्योतिः' इति न्यायतः श्रुत्यंतरे सिद्धत्वात् । यद्यपि स्वप्ने सधीः प्रति तथापि न धीः स्वप्नभोगोपलब्धिं प्रति करणत्वं भजते । किं तर्हि, पट- न्नवज्जाग्रद्वासनाश्रया दृश्यैव धीर्भवतीति न द्रष्टुः स्वयंज्योतिष्ट्वबाधः स्यात् । च्चान्यत् । जाग्रत्स्वप्नयोर्भूतानि चात्मानं च जानाति इमानि भूतान्ययमह- स्मीति । प्राप्तौ सत्यां प्रतिषेधो युक्तः स्यान्नाह खल्वयमित्यादि । तथा चेतनस्यैवा- द्यानिमित्तयोः सशरीरत्वे सति प्रियाप्रिययोरपहतिर्नास्तीत्युक्त्वा तस्यैवा- रीरस्य सतो विद्यायां सत्यां सशरीरत्वे प्राप्तयोः प्रतिषेधो युक्तो 'अशरीरं वाव न्तं न प्रियाप्रिये स्पृशतः' इति । एकश्चात्मा स्वप्नबुद्धान्तयोर्महामत्स्यवदसंगः चरतीति श्रुत्यंतरे सिद्धम् ॥

यच्चोक्तं संप्रसादः शरीरात्समुत्थाय यस्मिन्स्त्र्यादिभी रममाणो भवति ोऽन्यः संप्रसादादधिकरणनिर्दिष्ट उत्तमः पुरुष इति । तदप्यसत् । चतुर्थेऽपि र्याय 'एतं त्वेव ते' इति वचनात् । यदि ततोऽन्योऽभिप्रेतः स्यात्पूर्ववत् 'एतं वेव ते' इति न ब्रूयान्मृषा प्रजापतिः । किंचान्यस्तेजोबन्नादीनां स्रष्टुः सतः वविकारदेहशुंगे प्रवेशं दर्शयित्वा प्रविष्टाय पुनः तत्त्वमसीत्युपदेशो मृषा प्रस- ज्येत । तस्मिंस्त्वं स्त्र्यादिभी रन्ता भविष्यसीति युक्त उपदेशोऽभविष्यद्यदि सं- प्रसादादन्य उत्तमः पुरुषो भवेत् । तथा भूम्नि अहमेव इत्यादिश्य 'आत्मैवेदं सर्वं' इति नोपसमहरिष्यद्यदि भूमा जीवादन्योऽभविष्यत् । 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिश्रुत्यंतराच्च । सर्वश्रुतिषु च परस्मिन्नात्मशब्दप्रयोगो नाभविष्यत्प्र- त्यगात्मा चेत्सर्वजंतूनां पर आत्मा न भवेत् । तस्मादेक एवात्मा प्रकरणी सिद्धः ॥

न चात्मनः संसारित्वम् । अविद्याध्यस्तत्वादात्मनि संसारस्य । न हि रज्जुशुक्तिकागगनादिषु सर्परजतमलादीनि मिथ्याज्ञानाध्यस्तानि तेषां भवन्तीति । एतेन सशरीरस्य प्रियाप्रिययोरपहतिर्नास्तीति व्याख्यातम् । यच्च स्थितमप्रिय- वेत्तैवेति सिद्धम् । एवं च सति सर्वपर्यायेषु 'एतदमृतमभयमेतद्ब्रह्म' इति प्रजा- पतेर्वचनम् । यदि वा प्रजापतिच्छद्मरूपायाः श्रुतेर्वचनं, सत्यमेव भवेत् । न च तत्कुतर्कबुद्ध्या मृषा कर्तुं युक्तम् । ततो गुरुतरस्य प्रमाणांतरस्यानुपपत्तेः । ननु प्रत्यक्षं दुःखाद्यप्रियवेत्तृत्वमव्यभिचार्यनुभूयत इति चेन्न । जरादिरहितो जीर्णोऽहं जातोऽहमायुष्मान्गौरः कृष्णो मृत इत्यादिप्रत्यक्षानुभववत्तदुपपत्तेः । सर्वमप्ये- तत्सत्यमिति चेदस्त्येवैतदेवं दुरवगमं येन देवराजोऽपि उदशरावादिदर्शिताव-

नाशयुक्तिरपि सुमोहैवात्र 'विनाशमेवापीतो भवति' इति । तथा विरोचनो म
प्राज्ञः प्राजापत्योऽपि देहमात्रात्मदर्शनो बभूव । तथा इंद्रस्य आत्मविनाशभ
सागरे एव वैनाशिका न्यमज्जन् । तथा सांख्या द्रष्टारं देहादिव्यतिरिक्तमः
म्यापि त्यक्तागमप्रमाणत्वान्मृत्युविषय एवान्यत्वदर्शने तस्थुः । तथान्ये काणाद
दर्शनाः कषायरक्तमिव क्षारादिभिर्वस्त्रं नवभिरात्मगुणैर्युक्तमात्मद्रव्यं वि
धयितुं प्रवृत्ताः । तथान्ये कर्मिणो बाह्यविषयापहृतचेतसो वेदप्रमाणा अपि
मार्थसत्यमात्मैकत्वं विनाशमिव इंद्रवन्मन्यमाना घटीयंत्रवदारोहावरोहप्र
अनिशं बंभ्रमंति । किमन्ये क्षुद्रजंतवो विवेकहीनाः स्वभावत एव बहिर्विषय
तचेतसः । तस्मादिदं त्यक्तसर्वबाह्यैषणैरनन्यशरणैः परमहंसपरिव्राजकैः अ
श्रमिभिर्वेदान्तविज्ञानपरैरेव वेदनीयं पूज्यतमैः प्राजापत्यं चेमं संप्रदायमनु
द्भिरुपनिबद्धं प्रकरणचतुष्टयेन । तथानुशासत्यद्यापि 'त एव नान्ये' इति ॥

**अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्माकाशात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥२॥**

तत्राशरीरस्य संप्रसादस्य अविद्यया शरीरेणाविशेषतां सशरीरतामेव र
मस्य शरीरात्समुत्थाय स्वेन रूपेण यथाभिनिष्पत्तिस्तथा वक्तव्येति दृ
उच्यते— अशरीरो वायुरविद्यमानं शिरःपाण्यादिमच्छरीरमस्येत्यशरीरः ।
चाभ्रं विद्युत्स्तनयित्नुरित्येतानि चाशरीराणि । तत्त्रैवं सति वर्षादिप्रयोजः
साने यथा । अमुष्मादिति भूमिष्ठा श्रुतिः द्युलोकसंबंधिनमाकाशदेशं व्य
शति । एतानि यथोक्तान्याकाशसमानरूपतामापन्नानि स्वेन वाय्वादिरूपेण
ह्यमाणान्याकाशाख्यतां गतानि, यथा संप्रसादोऽविद्यावस्थायां शरीरात्म
मेवापन्नः, तानि च तथाभूतान्यमुष्मात् द्युलोकसंबंधिनः आकाशदेशात्सम्
ष्ठन्ति वर्षणादिप्रयोजनाभिनिर्वृत्तये । कथम् । शिशिरापाये सावित्रं परं ज्ये
प्रकृष्टं ग्रैष्मकमुपसंपद्य सावित्रमभितापं प्राप्येत्यर्थः । आदित्याभितापेन पृथ
वमापादिताः सन्तः स्वेन स्वेन रूपेण पुरोवातादिवायुरूपेण स्तिमितभावं हि
भ्रमपि भूमिपर्वतहस्त्यादिरूपेण विद्युदपि स्वेन ज्योतिर्लतादिचपलरूपेण 
यित्नुरपि स्वेन गर्जिताशनिरूपेणेत्येवं प्रावृडागमे स्वेन स्वेन रूपेणाभिनिष्पद्यं

**एवमेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य रूपेणाभिनिष्पद्यते स उत्तमपुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणः**

**र्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आच-**
**णे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥३॥**

यथायं दृष्टान्तो वाग्वादीनां आकाशादिसाम्यगमनवत् अविद्यया संसा-
वस्थायां शरीरसाम्यमापन्नोऽहममुष्य पुत्रो जातो जीर्णो मरिष्ये इत्येवंप्रकारं
जापतिनेव मघवान्यथोक्तेन क्रमेण, नासि त्वं देहेंद्रियादिधर्मा, तत्त्वमसीति
तिबोधितः सन्स एष संप्रसादो जीवोऽस्माच्छरीरादाकाशादिव वाग्वादयः समु-
थाय देहादिविलक्षणं आत्मनो रूपमवगम्य, देहात्मभावनां हित्वेत्येतत् । स्वेन
रूपेण सदात्मनैवाभिनिष्पद्यत इति व्याख्यातं पुरस्तात् । स येन स्वेन रूपेण
संप्रसादोऽभिनिष्पद्यते प्राक्प्रतिबोधात् तद्भ्रान्तिनिमित्तात्सर्पो भवति यथा रज्जुः,
पश्चात्कृतप्रकाशा रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते । एवं च स उत्तमपुरुष
उत्तमश्चासौ पुरुषश्चेत्युत्तमपुरुषः स एवोत्तमपुरुषः । अक्षिस्वप्नपुरुषौ व्यक्तावव्य-
क्तश्च सुषुप्तः समस्तः संप्रसन्नोऽशरीरश्च स्वेन रूपेणेति । एषामेष स्वेन रूपेणाव-
स्थितः क्षराक्षरौ व्याकृताव्याकृतौ अपेक्ष्योत्तमपुरुषः । कृतनिर्वचनो ह्ययं गीतासु ।
स संप्रसादः स्वेन रूपेण तत्र स्वात्मनि स्वस्थतया सर्वात्मभूतः पर्येति क्वचिदिंद्रा-
द्यात्मना जक्षद्धसन्भक्षयन्वा भक्ष्यानुच्चावचानीप्सितान् क्वचिन्मनोमात्रैः सं-
कल्पादेव समुत्थितैर्ब्राह्मलौकिकैर्वा क्रीडन्स्त्र्यादिभी रममाणश्च मनसैव, नोपजनं,
स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्युपजनं, आत्मभावेन वात्मसामीप्येन
जायत इत्युपजनं, इदं शरीरं, तन्न स्मरन् । तत्स्मरणे हि दुःखमेव स्यात् ।
दुःखात्मकत्वात्तस्य ॥

नन्वनुभूतं चेन्न स्मरेदसर्वज्ञत्वं मुक्तस्य । नैष दोषः । येन मिथ्याज्ञाना-
दिना जनितं तच्च मिथ्याज्ञानादि विद्ययोच्छेदितं, अतस्तन्नानुभूतमेवेति न
तदस्मरणे सर्वज्ञत्वहानिः । न ह्युन्मत्तेन ग्रहगृहीतेन वा यदनुभूतं तदुन्मादाद्य-
पगमेऽपि स्मर्तव्यं स्यात् । तथेहापि संसारिभिरविद्यादोषवद्भिर्यदनुभूयते तं-
त्सर्वात्मानमशरीरं न स्पृशति । अविद्यानिमित्ताभावात् । ये तूच्छिन्नदोषैर्मृदि-
तकषायैः मानसाः सत्याः कामाः अनृतापिधाना अनुभूयन्ते विद्याभिव्यंग्यत्वात्त
एव मुक्तेन सर्वात्मभूतेन संबध्यन्त इत्यात्मज्ञानस्तुतये निर्दिश्यन्ते । अतः साध्वेत-
द्विशिनष्टि— य एते ब्रह्मलोके इति । यत्र क्वचन भवन्तोऽपि ब्रह्मण्येव हि ते
लोके भवन्तीति सर्वात्मत्वाद्ब्रह्मण उच्यन्ते ॥

ननु कथमेकः सन्नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भू कामांश्च ब्राह्मलौकिकान्पश्यन् रमत इति च विरुद्धम् । यथैको यस्मिन्नेव क्ष पश्यति तस्मिन्नेव क्षणे न पश्यति चेति । नैष दोषः । श्रुत्यंतरे परिहृतत्वात् द्रष्टुर्दृष्टेरविपरिलोपात्पश्यन्नेव भवति । द्रष्टुरन्यत्वेन कामानामभावाच्च पश्य चेति । यद्यपि सुषुप्ते तदुक्तं मुक्तस्यापि सर्वैकत्वात्समानो द्वितीयाभावः । 'केन पश्येत्' इति चोक्तमेव । अशरीरस्वरूपोऽपहतपाप्मादिलक्षणः सन्कथमेष पुरुषो क्षिणि दृश्यत इत्युक्तः प्रजापतिना ? तत्र यथाऽसावक्षिणि साक्षात् दृश्यते तद्वक्त मिति इदमारभ्यते । तत्र को हेतुरक्षिणि दर्शन इत्याह— स दृष्टान्तो यथा प्रयो प्रयोग्यपरो वा स-शब्दः । प्रयुज्यत इति प्रयोग्योऽश्वो बलीवर्दो वा । यथा लो आचरत्यनेनेत्याचरणो रथोऽनो वा तस्मिन्नाचरणे युक्तस्तदाकर्षणाय, एवमस्मिन् रीरे रथस्थानीये प्राणः पंचवृत्तिरिंद्रियमनोबुद्धिसंयुक्तः प्रज्ञात्मा विज्ञानक्रि शक्तिद्वयसंमूर्छितात्मा युक्तः स्वकर्मफलोपभोगनिमित्तं नियुक्तः । 'कस्मिन्नु अह त्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति ईश्वरेण रा सर्वाधिकारी दर्शनश्रवणचेष्टाव्यापारेऽधिकृतः । तस्यैव तु मात्रा एकदेशश्चक्षु द्रियं रूपोपलब्धिद्वारभूतम् ॥

**अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय च रथ यो वेदेदं जिघ्राणीति स आत्मा गंधाय घ्राणमथ यो वेदेदमभिव्याह णीति स आत्माभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्र णाय श्रोत्रम् ॥४॥**

अथ यत्र कृष्णतारोपलक्षितमाकाशं देहच्छिद्रं अनुविषण्णमनुषक्तमनुग तत्र स प्रकृतोऽशरीर आत्मा चाक्षुषश्चक्षुषि भव इति चाक्षुषः, तस्य दर्शन रूपोपलब्धये चक्षुः करणं, यस्य तद्देहादिभिः संहतत्वात्परस्य द्रष्टुरर्थे, सो चक्षुषि दर्शनेन लिंगेन दृश्यते परोऽशरीरोऽसंहतः । 'अक्षिणि दृश्यत' इति प्र पतिनोक्तं सर्वेन्द्रियद्वारोपलक्षणार्थम् । सर्वविषयोपलब्धा हि स एवेति । स्फु पलब्धिहेतुत्वात्तु अक्षिणीति विशेषवचनं सर्वश्रुतिषु । 'अहमदर्शमिति तत्र भवति' इति च श्रुतेः । अथापि योऽस्मिन्देहे वेद । कथं ? इदं सुगंधि दुर्गंधि जिघ्राणीत्यस्य गंधं विजानीयामिति, स आत्मा, तस्य गंधाय गंधविज्ञानाय घ्राणम् अथ यो वेदेदं वचनमभिव्याहराणीति वदिष्यामीति, स आत्मा अभिव्य

ाक्रियासिद्ध्यै करणं वागिंद्रियम् । अथ यो वेदेदं शृणवानीति स आत्मा, श्रवणाय श्रोत्रम् ॥

**अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा ष एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके ॥५॥**

अथ यो वेदेदं मन्वानीति मननव्यापारमिंद्रियासंस्पृष्टं केवलं मन्वानीति दं, स आत्मा, मननाय मनः । यो वेद स आत्मेत्येवं सर्वत्र प्रयोगाद्वेदनास्य स्वरूपमित्यवगम्यते । यथा यः पुरस्तात्प्रकाशयति स आदित्यो, यो ःक्षिणतो यः पश्चाद्य उत्तरतो य ऊर्ध्वं प्रकाशयति स आदित्य, इत्युक्ते प्रकाशस्वरूपः इति गम्यते । दर्शनादिक्रियानिर्वृत्त्यर्थानि तु चक्षुरादिकरणानि । इदं ञ्चास्यात्मनः सामर्थ्यादवगम्यते । आत्मनः सत्तामात्र एव ज्ञानकर्तृत्वं, न तु व्यापृततया । यथा सवितुः सत्तामात्र एव प्रकाशनकर्तृत्वं, न तु व्यापृततयेति तद्वत् । मनोऽस्य आत्मनो दैवमप्राकृतं इतरेंद्रियैरसाधारणं चक्षुश्चष्टे पश्यत्यनेनेति चक्षुः । वर्तमानकालविषयाणि चेंद्रियाण्यतोऽदैवानि तानि । मनस्तु त्रिकालविषयोपलब्धिकरणं मृदितदोषं च सूक्ष्मव्यवहितादिसर्वोपलब्धिकरणं चेति दैवं चक्षुरुच्यते । स वै मुक्तः स्वरूपापन्नोऽविद्याकृतदेहेंद्रियमनोवियुक्तः सर्वात्मभावमापन्नः सन्नेष व्योमवद्विशुद्धः सर्वेश्वरो मनउपाधिः सन्नेतेनैवेश्वरेण मनसा एतान्कामान् सवितृप्रकाशवन्नित्यप्रततेन दर्शनेन पश्यन्रमते । कान्कामानिति विशिनष्टि— य एते ब्रह्मणि लोके हिरण्यनिधिवत् बाह्यविषयासंगानृतेनापिहिताः संकल्पमात्रलभ्याः तानित्यर्थः॥

**तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥६॥ इति द्वादशः खंडः ॥**

यस्मादेष इंद्राय प्रजापतिनोक्त आत्मा, तस्मात्ततः श्रुत्वा तमात्मानमद्यत्वेऽपि देवा उपासते । तदुपासनाच्च तेषां सर्वे च लोका आत्ताः प्राप्ताः सर्वे च कामाः । यदर्थं हींद्र एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास तत्फलं प्राप्तं देवैरित्यभिप्रायः । तद्युक्तं देवानां महाभाग्यत्वात् न त्विदानीं मनुष्याणामल्पजीवितत्वान्मंदतरप्रज्ञत्वाच्च संभवतीति प्राप्ते इदमुच्यते— स सर्वांश्च लोका-

नाप्नोति सर्वांश्च कामानिदानींतनोऽपि । कोऽसौ । इंद्रादिवत् यस्तमात्म मनुविद्य विजानातीति ह सामान्येन किल प्रजापतिरुवाच । अतः सर्वेष त्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवतीत्यर्थः । द्विर्वचनं प्रकरणसमाप्त्यर्थः इति द्वादशः खंडः ॥ ८.१२.

**श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि वि पापं चंद्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोक भिसंभवामीत्यभिसंभवामीति ॥१॥ इति त्रयोदशः खंडः ॥**

श्यामाच्छबलं प्रपद्य इत्यादिमंत्राम्नायः पावनो जपार्थश्च ध्यानार्थो श्यामो गंभीरो वर्णः श्याम इव श्यामो हार्दं ब्रह्म अत्यंतदुरवगाह्यत्वात् त ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छ्यामाच्छबलं शबल इव शबलः अरण्याद्यनेकक मिश्रत्वाद्ब्रह्मलोकस्य शाबल्यं तं ब्रह्मलोकं शबलं प्रपद्ये मनसा शरीरपाताद्वे गच्छेयम् । यस्मादहं शबलाद्ब्रह्मलोकात् नामरूपव्याकरणाय श्यामं प्रपद्ये ह भावं प्रपन्नोऽस्मीत्यभिप्रायः । अतस्तमेव प्रकृतिस्वरूपमात्मानं शबलं इत्यर्थः । कथं शबलं ब्रह्मलोकं प्रपद्य इत्युच्यते— अश्व इव स्वानि लोम विधूय कंपनेन श्रमं पांस्वादि च रोमतोऽपनीय यथा निर्मलो भवति, हार्दब्रह्मज्ञानेन विधूय पापं धर्माधर्माख्यं चंद्र इव च राहुग्रस्तः, तस्माद्र मुखात्प्रमुच्य भास्वरो भवति यथा, एवं धूत्वा प्रहाय शरीरं सर्वानर्थाश्रयं ध्यानेन कृतात्मा कृत्यकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमाभिसंभवामीति । द्विर्व मंत्रसमाप्त्यर्थम् ॥ इति त्रयोदशः खंडः ॥ ८.१३.

**आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म तदमृतं आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो र यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्येतमदत्कमद श्येतं लिंदु माभिगां लिंदु माभिगाम् ॥१॥ इति चतुर्दशः खंडः ॥**

आकाशो वा इत्यादि ब्रह्मणो लक्षणनिर्देशार्थमाध्यानाय । आकाशो नाम श्रुतिषु प्रसिद्ध आत्मा । आकाश इवाशरीरत्वात्सूक्ष्मत्वाच्च । स चाक नामरूपयोः स्वात्मस्थयोर्जगद्बीजभूतयोः सलिलस्येव फेनस्थानीययोः निर्वा निर्वोढा व्याकर्ता । ते नामरूपे यदंतरा यस्य ब्रह्मणोऽन्तरा मध्ये वर्तेते, तद नामरूपयोरंतरा मध्येऽन्यन्नामरूपाभ्यामस्पृष्टं यदित्येतत् तत् ब्रह्म नामरूपविल

मरूपाभ्यामस्पृष्टं तथापि तयोर्निर्वोढृ एवंलक्षणं ब्रह्मेत्यर्थः । इदमेव मैत्रेयीब्राह्मणेनोक्तम् । चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यत एकवाक्यता । कथं तदवगम्यत इत्याह— स आत्मा । आत्मा हि नाम सर्वजंतूनां प्रत्यक्चेतनः स्वसंवेद्यः प्रसिद्धस्तेनैव स्वरूपेणोन्नीय अशरीरो व्योमवत्सर्वगत आत्मा ब्रह्मेत्यवगंतव्यम् । तच्चात्मा ब्रह्मामृतममरणधर्मा । अत ऊर्ध्वं मंत्रः । प्रजापतिश्चतुर्मुखस्तस्य सभां वेश्म प्रभुविमितं वेश्म प्रपद्ये गच्छेयम् । किंच यशोऽहं यशो नाम आत्माहं भवामि ब्राह्मणानाम् । ब्राह्मणा एव हि विशेषतस्तमुपासते ततस्तेषां यशो भवामि । तथा राज्ञां विशां च । तेऽप्यधिकृता एवेति तेषामप्यात्मा भवामि । तद्यशोऽहमनुप्रापत्सि अनुप्राप्तुमिच्छामि । स हाहं यशसामात्मनां देहेंद्रियमनोबुद्धिलक्षणानामात्मा । किमर्थमहमेवं प्रपद्य इति, उच्यते— श्येतं वर्णतः पक्वबदरसमं रोहितम् । तथाऽदत्कं दंतरहितमप्यदत्कं भक्षयितृ स्त्रीव्यंजनं तत्सेविनां तेजोबलवीर्यविज्ञानधर्माणामपहंतृ विनाशयितृ इत्येतत् । यदेवंलक्षणं श्येतं लिंदु पिच्छलं तन्माऽभिगां माभिगच्छेयम् । द्विर्वचनमत्यंतानर्थहेतुत्वप्रदर्शनार्थम् ॥ इति चतुर्दशः खंडः ॥ ८.१४.—

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुंबे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ॥१॥ इति पंचदशः खंडः ॥ इति अष्टमोऽध्यायः समाप्तः ॥**

तद्धैतदात्मज्ञानं सोपकरणमोमित्येतदक्षरमित्याद्यैः सहोपासनैस्तद्वाचकेन ग्रंथेनाष्टाध्यायीलक्षणेन सह ब्रह्मा हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण प्रजापतये कश्यपायोवाच । असावपि मनवे स्वपुत्राय । मनुः प्रजाभ्यः । इत्येवं श्रुत्यर्थसंप्रदायपरंपरयागतं उपनिषद्विज्ञानमद्यापि विद्वत्स्ववगम्यते । यथेह षष्ठाद्यध्यायत्रये प्रकाशितात्मविद्या सफलावगम्यते तथा कर्मणां न कश्चनार्थ इति प्राप्ते, तदानर्थक्यप्राप्तिपरिजिहीर्षयेदं कर्मणो विद्वद्भिरनुष्ठीयमानस्य विशिष्टफलवत्वेनार्थवत्त्वमुच्यते— आचार्यकुलाद्वेदमधीत्य सहार्थतोऽध्ययनं कृत्वा, यथाविधानं यथास्मृत्युक्तैर्नियमैर्युक्तः सन्नित्यर्थः । सर्वस्यापि विधेः स्मृत्युक्तस्योपकुर्वाणकं

प्रति कर्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह— गुरोः कर्म यत्कर्त तत्कृत्वा कर्मशून्यो योऽतिशिष्टः कालस्तेन कालेन वेदमधीत्येत्यर्थः । एवं नियमवताधीतो वेदः कर्मज्ञानफलप्राप्तये भवति, नान्यथेत्यभिप्रायः । अ समावृत्य धर्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य कु स्थित्वा गार्हस्थ्ये विहिते कर्मणि तिष्ठन्नित्यर्थः । तत्रापि गार्हस्थ्यविहितानां ब णां स्वाध्यायस्य प्राधान्यप्रदर्शनार्थमुच्यते— शुचौ विविक्तेऽमेध्यादिर देशे यथावदासीनः स्वाध्यायमधीयानो नैत्यकमधिकं च यथाशक्ति ऋगाद्यभ्य च कुर्वन् धार्मिकान्पुत्राञ्शिष्यांश्च धर्मयुक्तान्विदधत् धार्मिकत्वेन तान्नियमया त्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेंद्रियाणि संप्रतिष्ठाप्योपसंहृत्य इंद्रियग्रहणात्कर्म च संन्यस्य अहिंसन्हिंसां परपीडामकुर्वन्सर्वभूतानि स्थावरजंगमानि भूतान्यपि यन्नित्यर्थः । भिक्षानिमित्तमटनादिनापि परपीडा स्यादित्यत आह— अन तीर्थेभ्यः । तीर्थं नाम शास्त्रानुज्ञाविषयस्ततोऽन्यत्रेत्यर्थः । सर्वाश्रमिणां चैत मानम् । तीर्थेभ्योऽन्यत्र अहिंसैवेत्यन्ये वर्णयन्ति कुटुंबे एवैतत्सर्वं कुर्वन्स ख धिकृतो, यावदायुषं यावज्जीवमेवं यथोक्तेन प्रकारेणैव वर्तयन्ब्रह्मलोकमभि पद्यते देहान्ते । न च पुनरावर्तते शरीरग्रहणाय । पुनरावृत्तेः प्राप्तायाः प्रतिषेधा अर्चिरादिना मार्गेण कार्यब्रह्मलोकमभिसंपद्य यावद्ब्रह्मलोकस्थितिः तावत्त तिष्ठति प्राक्ततो नावर्तत इत्यर्थः । द्विरभ्यासः उपनिषद्विद्यापरिसमाप्त्यर्थः इति पंचदशः खंडः ॥ ८.१५.

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीशंकरभगवतः कृतौ छांदोग्योपनिषद्भाष्यं समाप्तम् ॥

---

ॐ । आप्यायन्तु ममांगानि वाक्प्राणचक्षुः श्रोत्रमथो बलमिंद्रियाणि सर्वाणि सर्वं ब्रह्मौपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकर मस्त्वनिराकरणं मेऽस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु मयि सन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

**इति सामवेदीया छांदोग्योपनिषत्समाप्ता ॥**

---

अधुना सत्यादीनि भिक्षोः सम्यग्ज्ञानसहकारीणि साधनानि विधीयन्ते निवृत्तिप्रधानानि । सत्येन अनृतत्यागेन मृषावदनत्यागेन लभ्यः प्राप्तव्यः । किंच, तपसा हीन्द्रियमनएकाग्रतया । "मनसश्चेंद्रियाणां च ह्यैकाग्र्यं परमं तपः" इति स्मरणात् । तद्ध्यनुकूलं आत्मदर्शनाभिमुखीभावात्परमं साधनं तपो नेतरच्चांद्रायणादि । एष आत्मा लभ्य इत्यनुषंगः सर्वत्र । सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन ब्रह्मचर्येण मैथुनासमाचारेण । नित्यं सर्वदा, नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्तर्दीपिकान्यायेनानुषक्तव्यः । वक्ष्यति च—'न येषु जिह्ममनृतं न माया च' इति । क्व असावात्मा य एतैः साधनैर्लभ्य इत्युच्यते । अंतःशरीरेऽन्तर्मध्ये शरीरस्य पुंडरीकाकाशे ज्योतिर्मयो हि रुक्मवर्णः शुभ्रः शुद्धो यमात्मानं पश्यन्त्युपलभन्ते यतयो यतनशीलाः संन्यासिनः क्षीणदोषाः क्षीणक्रोधादिचित्तमलाः, स आत्मा नित्यं सत्यादिसाधनैः संन्यासिभिर्लभ्यत इत्यर्थः । न कादाचित्कैः सत्यादिभिर्लभ्यते । सत्यादिसाधनस्तुत्यर्थोऽयमर्थवादः ॥

**सत्यमेव जयति नानृतं सत्येन पंथा विततो देवयानः ।**
**येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥६॥**

सत्यमेव सत्यवानेव जयति नानृतं नानृतवादीत्यर्थः । नहि सत्यानृतयोः केवलयोः पुरुषानाश्रितयोर्जयः पराजयो वा संभवति । प्रसिद्धं लोके सत्यवादिनानृतवाद्यभिभूयते न विपर्ययः, अतः सिद्धं सत्यस्य बलवत्साधनत्वम् । किंच, शास्त्रतोऽप्यवगम्यते सत्यस्य साधनातिशयत्वम् । कथम्? सत्येन यथाभूतवादव्यवस्थया पंथा देवयानाख्यो विततो विस्तीर्णः सातत्येन प्रवृत्तः । येन पथा ह्याक्रमन्ति आक्रमन्ते ऋषयो दर्शनवन्तः कुहकमायाशाठ्याहंकारदंभानृतवर्जिता ह्याप्तकामा विगततृष्णाः सर्वतो यत्र यस्मिंस्तत्परमार्थतत्त्वं सत्यस्योत्तमसाधनस्य संबंधि साध्यं परमं प्रकृष्टं निधानं पुरुषार्थरूपेण निधीयत इति निधानं वर्तते । तत्र च येन पथा आक्रमन्ति स सत्येन वितत इति पूर्वेण संबंधः ॥

**बृहच्च तद्दिव्यमचिंत्यरूपं**
**सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।**
**दूरात्सुदूरे तदिहांतिके च**
**पश्यत्स्विहैव निहितं गुहायाम् ॥७॥**

किं तत्किंधर्मकं च तदित्युच्यते— बृहन्महच्च तत्प्रकृतं ब्रह्म सत्यादि- सर्वतोव्याप्तत्वात् । दिव्यं स्वयंप्रभमनिंद्रियगोचरं अत एव न चिंतयितुं तेऽस्य रूपमित्यचिंत्यरूपम् । सूक्ष्मादाकाशादेरपि तत्सूक्ष्मतरं, निरतिशयं क्ष्म्यमस्य सर्वकारणत्वात् । विभाति विविधमादित्यचंद्राद्याकारेण भाति ते । किंच, दूराद्विप्रकृष्टदेशात्सुदूरे विप्रकृष्टतरे देशे वर्ततेऽविदुषामत्यंता- वात्तद्ब्रह्म । इह देहे अंतिके समीपे च विदुषामात्मत्वात् । सर्वान्तरत्वाच्चा- श्याप्यंतरश्रुतेः । इह पश्यत्सु चेतनावत्स्वित्येतान्निहितं स्थितं दर्शनादिक्रिया- न योगिभिर्लक्ष्यमाणम् । क्व? गुहायां बुद्धिलक्षणायाम् । तत्र हि निगूढं ते विद्वद्भिः । तथाप्यविद्यया संवृतं सन्न लक्ष्यते तत्रस्थमेवाविद्वद्भिः ॥

**न चक्षुषा गृह्यते नापि वाचा**
**नान्यैर्देवैस्तपसा कर्मणा वा ।**
**ज्ञानप्रसादेन विशुद्धसत्त्व-**
**स्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥८॥**

पुनरप्यसाधारणं तदुपलब्धिसाधनमुच्यते— यस्मान्न चक्षुषा गृह्यते केन- प्यरूपत्वान्नापि गृह्यते वाचाऽनभिधेयत्वान्न चान्यैर्देवैरितरैरिंद्रियैः । तपसः सर्व- साधनत्वेऽपि न तपसा गृह्यते । तथा वैदिकेनाग्निहोत्रादिकर्मणा प्रसिद्ध- त्वेनापि न गृह्यते । किं पुनस्तस्य ग्रहणे साधनमित्याह— ज्ञानप्रसादेन ःमावबोधनसमर्थमपि स्वभावेन सर्वप्राणिनां ज्ञानं बाह्यविषयरागादिदोषकलु- ं प्रसन्नमशुद्धं सन्नावबोधयति नित्यं संनिहितमप्यात्मतत्त्वं मलावनद्धमिव दर्शम् । विलुलितमिव सलिलम् । तद्यदा इंद्रियविषयसंसर्गजनितरागादिमल- लुष्यापनयनात् आदर्शसलिलादिवत्प्रसादितं स्वच्छं शान्तमवतिष्ठते, तदा नस्य प्रसादः स्यात् । तेन ज्ञानप्रसादेन विशुद्धसत्त्वो विशुद्धान्तःकरणो योग्यो ा द्रष्टुं यस्मात् ततस्तस्मात्तु तमात्मानं पश्यते पश्यत्युपलभते निष्कलं सर्वा- वभेदवर्जितं ध्यायमानः सत्यादिसाधनवानुपसंहृतकरणः एकाग्रेण मनसा- ायमानश्चिंतयन् ॥

**एषोऽणुरात्मा चेतसा वेदितव्यो**
**यस्मिन्प्राणः पंचधा संविवेश ।**

प्राणैश्चित्तं सर्वमोतं प्रजानां
यस्मिन्विशुद्धे विभवत्येष आत्मा ॥९॥

यमात्मानमेवं पश्यति, एषोऽणुः सूक्ष्मः आत्मा चेतसा विशुद्धज्ञानेन केवलेन वेदितव्यः। क्वासौ ? यस्मिञ्छरीरे प्राणो वायुः पंचधा प्राणापानादिभेदेन संविवेश सम्यक्प्रविष्टः, तस्मिन्नेव शरीरे हृदये चेतसा ज्ञेय इत्यर्थः। कीदृशेन चेतसा वेदितव्य इत्याह— प्राणैः सहेन्द्रियैश्चित्तं सर्वमंतःकरणं प्रजानामोतं व्याप्तं येन क्षीरमिव स्नेहेन, काष्ठमिवाग्निना। सर्वं हि प्रजानामंतःकरणं चेतनावत्प्रसिद्धं लोके। यस्मिंश्च चित्ते क्लेशादिमलवियुक्ते शुद्धे विभवत्येष उक्त आत्मा विशेषेण स्वेनात्मना विभवति आत्मानं प्रकाशयतीत्यर्थः ॥

यं यं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामां-
स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥१०॥

इति तृतीयमुंडके प्रथमः खंडः ॥

य एवमुक्तलक्षणं सर्वात्मानमात्मत्वेन प्रतिपन्नस्तस्य सर्वात्मत्वादेव सर्वावाप्तिलक्षणं फलमाह— यं यं लोकं पित्रादिलक्षणं मनसा संविभाति संकल्पयति मह्यमन्यस्मै वा भवेदिति, विशुद्धसत्त्वः क्षीणक्लेश आत्मविन्निर्मलांतःकरणः कामयते यांश्च कामान्प्रार्थयते भोगांस्तं तं लोकं जयते प्राप्नोति तांश्च कामान्संकल्पितान्भोगान् । तस्माद्विदुषः सत्यसंकल्पत्वादात्मज्ञं आत्मज्ञानेन विशुद्धान्तःकरणं ह्यर्चयेत्पूजयेत्पादप्रक्षालनशुश्रूषानमस्कारादिभिः भूतिकामो विभूतिमिच्छुः। ततः पूजार्ह एवासौ ॥ इति तृतीयमुंडके प्रथमः खंडः॥

---

## तृतीयमुंडके द्वितीयः खंडः ।

स वेदैतत्परमं ब्रह्म धाम
यत्र विश्वं निहितं भाति शुभ्रम् ।
उपासते पुरुषं ये ह्यकामा-
स्ते शुक्रमेतदतिवर्तन्ति धीराः ॥१॥

यस्मात्स वेद जानातीत्येतद्यथोक्तलक्षणं ब्रह्म परमं प्रकृष्टं धाम सर्वकामा-
ाश्रयमास्पदं, यत्र यस्मिन्ब्रह्मणि धाम्नि विश्वं समस्तं जगन्निहितमर्पितं, यच्च
: ज्योतिषा भाति शुभ्रं शुद्धम्। तमप्येवमात्मज्ञं पुरुषं ये ह्यकामा विभूतितृ-
ग्वर्जिता मुमुक्षवः सन्त उपासते परमिव देवं, ते शुक्रं नृबीजं यदेतत्प्रसिद्धं
ोपादानकारणं अतिवर्तन्त्यतिगच्छन्ति धीरा धीमन्तो, न पुनर्योनिं प्रसर्पन्ति
पुनः क्वचिद्रतिं करोति" इति श्रुतेः। अतस्तं पूजयेदित्यभिप्रायः ॥

**कामान्यः कामयते मन्यमानः**
**स कामभिर्जायते तत्र तत्र ।**
**पर्याप्तकामस्य कृतात्मनस्तु**
**इहैव सर्वे प्रविलीयन्ति कामाः ॥२॥**

मुमुक्षोः कामत्याग एव प्रधानं साधनमित्येतद्दर्शयति। कामान्यो दृष्टादृष्टेष्ट-
ग्यान्कामयते मन्यमानस्तद्गुणांश्चिन्तयानः प्रार्थयते, स तैः कामभिः कामैर्धर्मा-
र्मप्रवृत्तिहेतुभिः विषयेच्छारूपैः सह जायते तत्र तत्र । यत्र यत्र विषयप्राप्ति-
मित्तं कामाः कर्मसु पुरुषं नियोजयन्ति तत्र तत्र तेषु तेषु विषयेषु तैरेव कामैः
ष्टितो जायते। यस्तु परमार्थतत्त्वविज्ञानात्पर्याप्तकामः आत्मकामत्वेन परि
मंतत आप्ताः कामा यस्य, तस्य पर्याप्तकामस्य कृतात्मनोऽविद्यालक्षणादपर-
ादपनीय स्वेन परेण रूपेण कृत आत्मा विद्यया यस्य, तस्य कृतात्मनस्त्विहैव
ष्ठत्येव शरीरे सर्वे धर्माधर्मप्रवृत्तिहेतवः प्रविलीयन्ति प्रविलीयन्ते विलयमुप-
न्ति नश्यन्तीत्यर्थः। कामाः तज्जन्महेतुविनाशान्न जायन्त इत्यभिप्रायः ॥

**नायमात्मा प्रवचनेन लभ्यो**
**न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्य-**
**स्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥३॥**

यद्येवं सर्वलाभात्परम आत्मलाभः तल्लाभाय प्रवचनादय उपाया बाहुल्येन
र्तव्या इति प्राप्ते इदमुच्यते। योऽयमात्मा व्याख्यातो, यस्य लाभः परः
ुरुषार्थो, नासौ वेदशास्त्राध्ययनबाहुल्येन प्रवचनेन लभ्यः। तथा न मेधया
ंथार्थधारणशक्त्या। न बहुना श्रुतेन नापि भूयसा श्रवणेनेत्यर्थः। केन तर्हि
ाभ्य इत्युच्यते— यमेव परमात्मानमेवैष विद्वान्वृणुते प्राप्तुमिच्छति तेन वरणे-

नैष परमात्मा लभ्यो नान्येन साधनान्तरेण । नित्यलब्धस्वभावत्वात् । कीदृशोऽसौ विदुष आत्मलाभ इत्युच्यते— तस्यैष आत्मा अविद्यासंछन्नां स्वां परां तनुं स्वात्मतत्त्वं स्वरूपं विवृणुते प्रकाशयति, प्रकाश इव घटादिर्विद्यायां सत्यामाविर्भवतीत्यर्थः । तस्मादन्यत्यागेन आत्मलाभप्रार्थनैव आत्मलाभसाधनमित्यर्थः ॥

**नायमात्मा बलहीनेन लभ्यो**
**न च प्रमादात्तपसो वाऽप्यलिंगात् ।**
**एतैरुपायैर्यतते यस्तु विद्वां-**
**स्तस्यैष आत्मा विशते ब्रह्म धाम ॥४॥**

आत्मप्रार्थनासहायभूतान्येतानि च साधनानि बलाप्रमादतपांसि लिंगयुक्तानि संन्याससहितानि । यस्मादयमात्मा बलहीनेन बलप्रहीणेन आत्मनिष्ठाजनितवीर्यहीनेन न लभ्यो, नापि लौकिकपुत्रपश्वादिविषयसंगनिमित्तप्रमादात् । तथा तपसो वाऽप्यलिंगाल्लिंगरहितात् । तपोऽत्र ज्ञानम् । लिंगं संन्यासः । संन्यासरहिताज्ज्ञानान्न लभ्यत इत्यर्थः । एतैरुपायैर्बलाप्रमादसंन्यासज्ञानैः यतते तत्परः सन्प्रयतते यस्तु विद्वान्विवेक्यात्मवित् तस्य विदुष एष आत्मा विशते संप्रविशति ब्रह्म धाम ॥

**संप्राप्यैनमृषयो ज्ञानतृप्ताः**
**कृतात्मानो वीतरागाः प्रशान्ताः ।**
**ते सर्वगं सर्वतः प्राप्य धीरा**
**युक्तात्मानः सर्वमेवाविशन्ति ॥५॥**

कथं ब्रह्म विशत इत्युच्यते— संप्राप्य समवगम्यैनमात्मानं ऋषयो दर्शनवन्तस्तेनैव ज्ञानेन तृप्ता, न बाह्येन तृप्तिसाधनेन शरीरोपचयकारणेन । कृतात्मानः परमात्मस्वरूपेणैव निष्पन्नात्मानः सन्तः । वीतरागा विगतरागादिदोषाः । प्रशान्ता उपरतेन्द्रियाः । त एवंभूताः सर्वगं सर्वव्यापिनं आकाशवत्सर्वतः सर्वत्र प्राप्य, नोपाधिपरिच्छिन्नेनैकदेशेन । किं तर्हि, तद्ब्रह्मैवाद्वयं आत्मत्वेन प्रतिपद्य धीरा अत्यंतविवेकिनो युक्तात्मानो नित्यसमाहितस्वभावाः सर्वमेव समस्तं शरीरपातकालेऽप्याविशन्ति भिन्ने घटे घटाकाशवदविद्याकृतोपाधिपरिच्छेदं जहति । एवं ब्रह्मविदो ब्रह्म धाम प्रविशन्ति ॥

वेदान्तविज्ञानसुनिश्चितार्थाः
संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले
परामृताः परिमुच्यन्ति सर्वे ॥६॥

किंच वेदान्तजनितविज्ञानं वेदान्तविज्ञानं तस्यार्थः पर आत्मा विज्ञेयः, ाः सुनिश्चितो येषां ते वेदान्तविज्ञानसुनिश्चितार्थाः । ते च संन्यासयोगा-
र्मपरित्यागलक्षणयोगात् केवलब्रह्मनिष्ठास्वरूपाद्योगात् यतयो यतनशीलाः, त्त्वाः शुद्धं सत्त्वं येषां संन्यासयोगात्ते शुद्धसत्त्वाः । ते ब्रह्मलोकेषु । संसा-
ये मरणकालास्ते अपरांताः तानपेक्ष्य मुमुक्षूणां संसारावसाने देहपरित्याग-
: परांतकालः तस्मिन्परांतकाले साधकानां बहुत्वाद्ब्रह्मैव लोको ब्रह्म-
एकोऽप्यनेकवत् दृश्यते प्राप्यते च । अतो बहुवचनं ब्रह्मलोकेष्विति, ब्रह्म-
र्थः । परामृताः परममृतममरणधर्मकं ब्रह्म आत्मभूतं येषां ते परामृता
न्त एव ब्रह्मभूताः, परामृताः सन्तः परिमुच्यन्ति परि समंतात्प्रदीपनिर्वाणवत्
घटाकाशवच्च निवृत्तिमुपयान्ति । परिमुच्यन्ते परि समंतान्मुच्यन्ते सर्वे न-
न्तरं गन्तव्यमपेक्षन्ते । "शकुनीनामिवाकाशे जले वारिचरस्य च । पदं
न दृश्येत तथा ज्ञानवतां गतिः ॥" "अनध्वगा अध्वसु पारयिष्णवः" इति
स्मृतिभ्याम् । देशपरिच्छिन्ना हि गतिः संसारविषयैव । परिच्छिन्नसाधन-
त्वात् । ब्रह्म तु समस्तत्वान्न देशपरिच्छेदेन गंतव्यम् । यदि हि देशपरि-
न्नं ब्रह्म स्यान्मूर्तद्रव्यवदाद्यंतवदन्याश्रितं सावयवमनित्यं कृतकं च स्यात् ।
एवंविधं ब्रह्म भवितुमर्हति । अतस्तत्प्राप्तिश्च नैव देशपरिच्छिन्ना भवितुं युक्ता ।
चाविद्यादिसंसारबंधापनयमेव मोक्षमिच्छन्ति ब्रह्मविदो न तु कार्य-
म् ॥

गताः कलाः पंचदश प्रतिष्ठा
देवाश्च सर्वे प्रति देवतासु ।
कर्माणि विज्ञानमयश्च आत्मा
परेऽव्यये सर्व एकीभवन्ति ॥७॥

किंच मोक्षकाले या देहारंभिकाः कलाः प्राणाद्याः ताः स्वां स्वां प्रतिष्ठां
ाः स्वं स्वं कारणं गता भवन्तीत्यर्थः । प्रतिष्ठा इति द्वितीयाबहुवचनम् ।

वदश पंचदशसंख्याका या अंत्यप्रश्नपरिपठिताः प्रसिद्धा, देवाश्च देहाश्रया-
क्षुरादिकरणस्थाः सर्वे प्रतिदेवताखादित्यादिषु गता भवन्तीत्यर्थः। यानि च
मुक्षुणा कृतानि कर्माण्यप्रवृत्तफलानि प्रवृत्तफलानामुपभोगेनैव क्षीयमाणत्वात्।
ज्ञानमयश्चात्मा अविद्याकृतबुद्ध्याद्युपाधिमात्मत्वेन मत्वा जलादिषु सूर्यादिप्रति-
बवदिह प्रविष्टो देहभेदेषु कर्मणां तत्फलार्थत्वात्सह तेनैव विज्ञानमयेनात्मना।
तो विज्ञानमयो विज्ञानप्रायः। त एते कर्माणि विज्ञानमयश्चात्मा उपाध्यपनये
ते परेऽव्ययेऽनंतेऽक्षये ब्रह्मण्याकाशकल्पेऽजेऽजरेऽमृतेऽभयेऽपूर्वेऽनपरेऽनंतरेऽ-
ह्येऽद्वये शिवे शान्ते सर्वे एकीभवन्ति अविशेषतां गच्छन्त्येकत्वमापद्यन्ते
लाद्याधारापनय इव सूर्यादिप्रतिबिंबाः सूर्ये घटाद्यपनय इवाकाशे घटाद्याकाशाः।

**यथा नद्यः स्यंदमानाः समुद्रेऽ-**
**स्तं गच्छन्ति नामरूपे विहाय।**
**तथा विद्वान्नामरूपाद्विमुक्तः**
**परात्परं पुरुषमुपैति दिव्यम् ॥८॥**

किंच यथा नद्यो गंगाद्याः स्पंदमाना गच्छन्त्यः समुद्रे समुद्रं प्राप्यास्तं
र्शनमविशेषात्मभावं गच्छन्ति प्राप्नुवन्ति, नाम च रूपं च नामरूपे विहाय
था, तथा अविद्याकृतनामरूपाद्विमुक्तः सन्विद्वान्परादक्षरात्पूर्वोक्तात्परं दिव्यं
षं यथोक्तलक्षणमुपैत्युपगच्छति ॥

**स यो ह वै तत्परमं ब्रह्म वेद**
**ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति।**
**तरति शोकं तरति पाप्मानं**
**गुहाग्रंथिभ्यो विमुक्तोऽमृतो भवति ॥९॥**

ननु श्रेयस्यनेके विघ्नाः प्रसिद्धाः। अतः क्लेशानामन्यतमेनान्येन वा देवा-
ा च विघ्नितो ब्रह्मविदप्यन्यां गतिं मृतो गच्छति न ब्रह्मैव। न। विद्ययैव
ातिबंधस्यापनीतत्वात्। अविद्याप्रतिबंधमात्रो हि मोक्षो नान्यप्रतिबंधः।
त्वादात्मभूतत्वाच्च। तस्मात्स यः कश्चिद्ध वै लोके तत्परमं ब्रह्म वेद
ादहमेवास्मीति जानाति स नान्यां गतिं गच्छति। देवैरपि तस्य ब्रह्मप्राप्तिं
विघ्नो न शक्यते कर्तुम्। आत्मा ह्येषां स भवति। तस्माद्ब्रह्म विद्वान्
ा भवति। किंच नास्य विदुषोऽब्रह्मवित्कुले भवति। किंच तरति शोकं

नेकेष्टवैकल्यानिमित्तं मानसं संतापं जीवन्नेवातिक्रान्तो भवति । तरति पाप्मानं र्माधर्माख्यं गुहाग्रंथिभ्यो हृदयाविद्याग्रंथिभ्यो विमुक्तः सन्नमृतो भवतीत्युक्तमेव भिद्यते हृदयग्रंथिः' इत्यादि ॥

**तदेतदृचाऽभ्युक्तम्—**

**क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।**
**तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥१०॥**

अथेदानीं ब्रह्मविद्यासंप्रदानविध्युपप्रदर्शनेनोपसंहारः क्रियते । तदेतद्विद्यासंप्रदानविधानमृचा मंत्रेणाभ्युक्तमभिप्रकाशितम् । क्रियावन्तो यथोक्तकर्मानुष्ठानयुक्ताः । श्रोत्रिया ब्रह्मनिष्ठा अपरस्मिन्ब्रह्मण्यभियुक्ताः परब्रह्म बुभुत्सवः स्वयमेकर्षिं एकर्षिनामानमग्निं जुह्वते जुह्वति श्रद्धयन्तः श्रद्दधानाः सन्तो ये, तेषामेव संस्कृतात्मनां पात्रभूतानामेतां ब्रह्मविद्यां वदेत ब्रूयाच्छिरोव्रतं शिरस्यग्निधारणलक्षणम् । यथा अथर्वणानां वेदव्रतं प्रसिद्धम् । यैस्तु यैश्च तच्चीर्णं विधिवद्यथाविधानं तेषामेव वदेत ॥

**तदेतत्सत्यमृषिरंगिराः पुरोवाच नैतदचीर्णव्रतोऽधीते ।**
**नमः परमऋषिभ्यो नमः परमऋषिभ्यः ॥११॥**

**इति तृतीयमुंडके द्वितीयः खंडः ॥**

**ॐ भद्रं कर्णेभिरिति शान्तिः ।**

**इत्यथर्ववेदीया मुंडकोपनिषत्समाप्ता ॥**

तदेतदक्षरं पुरुषं सत्यं ऋषिरंगिरा नाम पुरा पूर्वं शौनकाय विधिवदुपसन्नाय पृष्टवते उवाच । तद्वदन्योऽपि तथैव श्रेयोर्थिने मुमुक्षवे मोक्षार्थं विधिवदुपसन्नाय ब्रूयादित्यर्थः । नैतत् ग्रंथरूपं अचीर्णव्रतोऽचरितव्रतोऽप्यधीते न पठति । चीर्णव्रतस्य हि विद्या फलाय संस्कृता भवतीति । समाप्ता ब्रह्मविद्या । सा येभ्यो ब्रह्मादिभ्यः पारंपर्यक्रमेण संप्राप्ता तेभ्यो नमः परमऋषिभ्यः । परमं ब्रह्म साक्षात् दृष्टवन्तो ये ब्रह्मादयोऽवगतवन्तश्च ते परमर्षयः तेभ्यो भूयोऽपि नमः । द्विर्वचनमत्यादरार्थं मुंडकसमाप्त्यर्थं च ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य श्रीगोविंदभगवत्पूज्यपादशिष्यस्य श्रीशंकरभगवतः कृतौ अथर्वणमुंडकोपनिषद्भाष्यं समाप्तम् ॥



# प्रतीकानुक्रमणिका ।

## SOME OF OUR PUBLICATIONS

N.B.—*Prices of the following books do not include postage*

**In Sanskrit—**

### 1—4. Works of Shankaracharya.

COMPLETE IN 4 VOLS.

[These Vols. can be purchased separately.]

I. **गीताभाष्यम्।** Bhagavadgita with Bhashya Rs.

II. **दशोपनिषद्भाष्यम्।** Ten principal Upanishad with Bhashya. Rs. 1

III. **ब्रह्मसूत्रभाष्यम्।** Brahmasutras with Bhashya Rs.

IV. **प्रकरणग्रंथाः।** Minor Works. Contains 3 minor works and Stotras, *e.g.*, अपरोक्षानुभूतिः, आत्मबोध वाक्यवृत्तिः, स्वात्मनिरूपणम्, अद्वैतानुभूतिः, योगतारावली, शतश्लोकं सर्ववेदान्तसिद्धान्तसारसंग्रहः, विवेकचूडामणिः, उपदेशसाहस्री, विष्णुसहस्रनाम भाष्यम्, सनत्सुजातीयभाष्यम्, आत्मानात्मविचारः, वेदान्तस्तोत्राणि, भक्ति स्तोत्राणि, etc. Rs.

---

**5.** **गीतासंग्रहः।** Vol. I. A collection of 10 Gitas भगवद्गीता, रामगीता, गणेशगीता, शिवगीता, देवीगीता, कपिलगीता, सूर्यगीता etc. Rs. 2-

**6.** **गीतासंग्रहः।** Vol. II. A collection of 10 more Gitas, अष्टावक्रगीता, अवधूतगीता, उत्तरगीता, रामगीता, ब्रह्मगीता, etc Rs. 2–

**7.** **उपनिषदां समुच्चयः।** A collection of 108 Upanishads including the principal ten. Rs.

In Sanskrit and English—

8. **The Seven Upanishads.**—With English trans lation (Isha, Kena, Katha, Prashna, Mundaka Taittiriya and Aitareya). Rs. 2-8-

9. **Brihadaranyaka Upanishad.**—With Englis translation. Rs. 3-0-

10. **The Bhagavadgita.**—Text, word for wor meaning in English, translation, critical and expla natory notes, also notes giving full explanation c the special interpretation put upon several verse by the late Lokamanya B. G. Tilak pointing ou where and how he differed from Shankaracharya Edited by H. R. Bhagavat. Rs. 3-8-

11. **Vedantasara** of Sadananda.—With Englis translation and the Sanskrit commentary of Rama tirtha. Re. 1-8-

12. **Sarvavedantasiddhantasarasangraha** of Shanka racharya.—With English translation. Rs. 3-0-

13. **The Sanskrit Dictionary.**—Sanskrit-Englis and English-Sanskrit in one handy volume. E H. R. Bhagavat. Rs. 3-8-

*All Communications should be addressed*—

ASHTEKAR & Co., POONA CITY

or

H. R. BHAGAVAT,

*Secretary, Ashtekar & Co., Poona Ci*

